अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।
संग्रहश्चानुमानश्च तोटकाधिबले तथा ॥ ८१ ॥
उद्वेगः सम्भ्रमाक्षेपावेषां लक्षणमुच्यते ।

तत्राभूताहरणम्—

अभूताहरणं तत्स्याद्वाक्यं यत्कपटाश्रयम् ॥ ८२ ॥

यथा तत्रैव पञ्चमेऽङ्के—

विरचयन् जननीमतिविस्मितां
भुजचतुष्टयवानजनिष्ट यः ।
स भगिनीं तव शूरसुतात्मजो
[1]यदुवरः परिणेष्यति रुक्मिणीम् ॥ ( ल०मा० ५।९ )

अत्र कपटवाक्यमिदमभूताहरणम् ।

---

ह्रास और ललिता को देखने से अन्वेषण होने से 'गर्भसन्धि' है। इसके बारह अंग होते हैं ॥ ७६–८० ॥

इन अंगों के नाम हैं— ( १ ) अभूताहरण ( २ ) मार्ग ( ३ ) रूप ( ४ ) उदाहरण ( ५ ) क्रम ( ६ ) संग्रह ( ७ ) अनुमान ( ८ ) तोटक ( ९ ) अधिबल ( १० ) उद्वेग ( ११ ) सम्भ्रम तथा ( १२ ) आक्षेप। अब क्रमशः इनके लक्षण बतलाए जाते हैं ॥ ७८–८१ ॥

**अभूताहरण**

व्याजपूर्ण वचनों का अभिधान 'अभूताहरण' कहलाता है ॥ ८२ ॥

जैसे इसी नाटक के पंचम अंक में—

जिसने चार भुजाओं वाले रूप को धारण कर जन्म लेते हुए अपनी माता को आश्चर्यचकित कर दिया था वही यादवश्रेष्ठ एवं शूरसेन प्रदेश की कन्या ( देवकी ) का पुत्र तुम्हारी बहिन रुक्मिणी से विवाह करेगा।

यहाँ व्याजपूर्ण वचन होने से 'अभूताहरण' है।

---

१. गुणवतीमिति अ. पु. पाठः ।

अथ मार्गः—

मार्गस्तत्त्वार्थकथनम् ,

यथा तत्रैव—कृष्णः ( पत्रिकां वाचयित्वा )

निखिला शिखिनि नयन्नपि सुखानि जात्यासितापाङ्गीः ।
रमयति कृष्णः सुघनो वृन्दावनगन्धिनीरेव ॥
( ल० मा० ५।१० )

अत्र हरिणा हृदयत्वप्रकटनान्मार्गः ।

अथ रूपम्—

रूपं[1] वाक्यं वितर्कवत्[2] ॥ ८३ ॥

यथा तत्रैव—

कृष्णः—( सानन्दम् ) सखे, कथमनुभूतपूर्वेव कापि शिञ्जितसरणी प्रसह्य मामार्द्रीकरोति ।

---

**मार्ग**

(प्रकृत विषय से सम्बद्ध) यथार्थ बात कह देना 'मार्ग' कहलाता है।

जैसे इसी नाटक में—

नारद—( पत्रिका पढ़ते हुए )

वह काला मेघ समस्त मयूरों को सुख देने पर भी अतितप्त अंग वाली वृन्दावन की सुगन्धित लताओं को ही अधिक रमाता है ( रमण करवाता है )।

यहाँ श्रीहरि के मन की यथार्थ बात को प्रकट कर देने के कारण 'मार्ग' है।

**रूप**

अनूठे या वितर्कपूर्ण वचनों का प्रयोग करना 'रूप' कहलाता है ॥८३॥

जैसे इसी नाटक में—

कृष्ण—( आनन्द में आकर ) मित्र, यह जानी पहिचानी पैंजन की गति मुझे बलात् अपनी ओर अनुरक्त कर रही है।

---

१. वाचि इति अ० पु० पाठः। २. वितर्कत्वमिति ख० पु० पाठः।

अत्र चन्द्रावलीनूपुरादिशिञ्जितश्रवणात् कृष्णस्य वितर्को रूपम् ।

अथोदाहरणम्—

सोत्कर्षं वचनं यत्तु तदुदाहरणं मतम् ॥ ८४ ॥

यथा तत्रैव—सुपर्णः ( निर्वर्ण्य सविस्मयम् )

सौन्दर्याम्बुनिधेर्विधाय मथनं दम्भेन दुग्धाम्बुधे-
र्गीर्वाणैरुदहारि हारि[1] परितो याँ सारसम्पन्मयी ।
सा लक्ष्मीरपि चक्षुषां चिरचमत्कारक्रियाचातुरीं
धत्ते हन्त, तथा न कान्तिभिरियं राज्ञः कुमारी यथा ॥

( ल० मा० ५।३० )

अत्र चन्द्रावलीरूपोत्कर्षकथनमुदाहरणम् ।

अथ क्रमः—

भावज्ञानं क्रमो यद्वा चिन्त्यमानार्थसङ्गतिः ॥ ८५ ॥

---

यहाँ चन्द्रावली के नूपुर आदि की आवाज सुन कर श्रीकृष्ण का वितर्क करना 'रूप' है ।

**उदाहरण**

उत्कर्षपूर्ण कथन को 'उदाहरण' समझना चाहिये ॥ ८४ ॥

जैसे इसी नाटक में—

सुपर्ण—( देख कर विस्मय-पूर्वक ) देवताओं ने अतिदंभ से क्षीर-समुद्र का मंथन कर जिस सौन्दर्य-सम्पत् की अधिष्ठात्री लक्ष्मी को उत्पन्न किया था वह लक्ष्मी भी नेत्रों को अतिशय चमत्कृत करने वाली ऐसी शोभा को नहीं धारण करती जैसी इस राजकुमारी की शोभा है।

यहाँ चन्द्रावली के सौन्दर्य का उत्कर्ष बतलाने के कारण 'उदाहरण' है।

**क्रम**

किसी की भावना या उसके द्वारा सोचे हुए अर्थ का उन्नयन करना 'क्रम' कहलाता है ॥ ८५ ॥

---

१. चारु चरितेति क० पु० पाठः ।

यथा षष्ठे—नवबृन्दा ( स्वगतम् )

जनितकमललक्ष्मीविभ्रमे नेत्रवीथीं
गतवति चिरकालादंशुके कंसहन्तुः[1] ।
अलघुभिरपि यत्नैर्दुस्तरां संवरीतुं
विकृतिमतुलबाधां हन्त ! राधा दधाति ॥ (ल०मा० ६।२५)

अत्र नवबृन्दाया राधाया भावज्ञानात् चिन्त्यमानहरि-चिह्नस्य राधया दर्शनाद्वा क्रमः ।

अथ संग्रहः—

संग्रहः सामदानार्थसंयोगः परिकीर्तितः[2] ॥ ८६ ॥

यथा तत्रैव पञ्चमे—भीष्मः ( सानन्दम् )

अविदितस्तनयामनयान्नय-
न्नुपकृतिं कृतवान्मम जाम्बवान् ।
मुनिमनःप्रणिधेयपदाम्बुज-

---

जैसे इसी नाटक के षष्ठ अंक में—

नवबृन्दा—( अपने मन में ) जिनके दर्शनों के कारण नेत्रों में कमल की शोभा अठखेलियाँ करती थी उन श्रीकृष्ण के पीताम्बर को बहुत समय बाद दिखाई देने पर यह राधा अनेक बार प्रयत्नों के द्वारा इस दुस्तर कष्ट को छिपाने पर भी विकार को धारण किए हुए है।

प्रस्तुत अंश में नवबृन्दा के द्वारा राधा की आन्तरिक भावना की कल्पना कर लेने से अथवा राधा के द्वारा निध्यात श्रीहरि के प्रति होने वाले आन्तरिक भाव का ( चिन्हों को देख कर ) उन्नयन करने के कारण 'क्रम' है।

**संग्रह**

प्रिय वचन के साथ दान आदि का करना 'संग्रह' कहलाता है ॥८६॥

जैसे इसी नाटक के पंचम अंक में—

भीष्म—बिना जाने ही इस कन्या को ले जाने वाले जाम्बवान् ने मुझ पर उपकार ही किया अन्यथा उसकी पुत्री को मुनिजन द्वारा

---

१. केशहन्तुरिति अ० पु० पाठः ।

२. अयमेव पाठः रसार्णवसुधाकरेऽपि लभ्यते ।

स्त्वमसि येन वरो दुहितुर्वरः ॥ ( ल० मा० ५।३७ )

अत्र सामनिमित्तकन्यासमर्पणादिना सङ्ग्रहः ।

अथानुमानम्—

लिङ्गादूहोऽनुमानता,

यथा तत्रैव षष्ठे—चन्द्रावली ( संस्कृतेन )

साधर्म्यं मधुरिपुविप्रयोगभाजां
तन्वङ्गी मुहुरियमङ्गकैस्तनोति ।
आकृत्या श्रियमपि माधवीं किमेनां
दैन्येपि प्रथयितुमार्तयः क्षमन्ते ॥ (ल०मा० ६।२३)

अत्र दैन्येऽपि माधुरीदर्शनेन लिङ्गेन कृष्णविप्रयोगभाक्त्वस्याभ्यूहोऽनुमानम् ।

अथ तोटकम्—

वचः संरम्भि तोटकम् ॥ ८७ ॥

---

समाधि में प्रत्यक्ष होने वाले आप जैसे परब्रह्म का वर के रूप में कैसे वरण होता ?

यहाँ प्रियवचन के साथ कन्या का दान करना 'संग्रह' है।

**अनुमान**

किसी के आंशिक चिह्न देख कर उसके समग्र स्वरूप की कल्पना करना 'अनुमान' कहलाता है ॥

जैसे इसी नाटक के षष्ठ अंक में—

चन्द्रावली—( संस्कृत भाषा में बोलती हुई ) यह कृशाङ्गी अपने कोमल अंग से माधव से वियुक्तजन की समानता बतला रही है और अपनी आकृति में वासन्ती शोभा धारण कर रही है इसलिये ऐसा प्रतीत हो रहा है कि पीडाएँ इसकी शोभा को इस दीन अवस्था में भी विस्तीर्ण करने में लगी हैं।

प्रस्तुत उदाहरण में दुःखी होने पर भी मुख पर सुन्दरता के दिखलाई देने रूपी कारण से श्रीकृष्ण के वियोगरूपी कार्य की कल्पना करना 'अनुमान' है।

**तोटक**—क्रोधावेश में आकर कहना 'तोटक' कहलाता है ॥ ८७ ॥

यथा तत्रैव षष्ठे—

नारदः—मणीन्द्रं पारीन्द्रप्रवरमहरन्निघ्नतनयं
विनिघ्नन्ते तञ्च प्रबलमथ भल्लूकनृपतिः ।
पराभूय स्वैरी तमपि मुरवैरी तव धनं
तदाहर्ता पाप त्वमसि पतितस्तापजलधौ ॥

( ल० मा० ६।२५ )

अत्र संरम्भेन तोटकं प्रकटमेव ।

अथाधिबलम्—

बुधैरधिबलं प्रोक्तं कपटेनाधिवञ्चनम् ॥ ८८ ॥

यथा तत्रैव पञ्चमे—कृष्णः—

पर्यशीलि पशुबालघटायां
केलिरङ्गघटनाय मया यः ।
सुष्ठु सोऽयमकरोत्परदुर्गे
वैशयन् सचिवतां नटवेषः ॥ ( ल० मा० ५।२७ )

अत्र नटवेषकपटेन परवञ्चनमधिबलम् ।

---

जैसे इसी नाटक के षष्ठ अंक में—

नारद—जिस ( स्यमन्तक ) मणि को तेरे पुत्र प्रसेनजित् को मार कर सिंह ने ले लिया था उसे भालुओं के शक्तिशाली राजा जाम्बवान् ने सिंह को मार कर प्राप्त कर लिया। उस स्वच्छन्दचारी को पराजित कर माधव तेरे उसी धन को ले आएँगे अतः हे पापी, तू संताप के सागर में क्यों पड़ा हुआ है।

प्रस्तुत उदाहरण में क्रोधावेश में नारद का कथन 'तोटक' है।

**अधिबल**

छल या व्याज से दूसरे के अभिप्राय का पता लगाना या उसे छलना 'अधिबल' कहलाता है ॥ ८८ ॥

जैसे इसी नाटक के पंचम अंक में—

श्रीकृष्ण—जिस नटवेष को मैंने पशु एवं ग्वाल बालों के समूह में क्रीडा, विलास आदि के लिये धारण किया था आज वही वेष मुझे शत्रुओं के दुर्ग में प्रवेश करने में बड़ा सहायक बन रहा है।

प्रस्तुत उदाहरण में नटरूप बना कर कपटवेष द्वारा शत्रुओं को धोखा देना 'अधिबल' है।

अथोद्वेगः—

शत्रुवैरादिसम्भूतं भयमुद्वेग उच्यते ॥ ८९ ॥

यथा तत्रैव—षष्ठे—

चन्द्रावली—( जनान्तिकम् ) सहि माहवि ! पेक्ख। एसो अज्जउत्तस्स सच्चसंकप्पिदा-सेदुविमद्दणो सच्चभामाए सोन्देरपूरो धीरं वि मं आन्दोलेदि। [ सखि माधवि, पश्य। एष आर्यपुत्रस्य सत्यसङ्कल्पिता-सेतुविमर्द्दनः सत्यभामायाः सौन्दर्यपूरो धीरामपि मामान्दोलयति। ]

अत्राविर्भूतसपत्नीदर्शनाच्चन्द्रावल्या उद्वेगः।

अथ सम्भ्रमः—

शत्रुव्याघ्रादिसम्भूता शङ्का स्यादिह सम्भ्रमः ॥ ९० ॥

यथा तत्रैव—पञ्चमे ( नेपथ्ये )

सप्तिस्सप्ती रथ इह रथः कुञ्जरः कुञ्जरो मे,
तूणस्तूणो धनुरुत धनुः भो कृपाणी कृपाणी।

---

**उद्वेग**

शत्रु या वैर से होने वाली घबड़ाहट को 'उद्वेग' समझना चाहिये॥

जैसे इसी नाटक के षष्ठ अंक में—

चन्द्रावली—( जनान्तिक के द्वारा ) अरी माधवी सखि, जरा देखो तो यह सत्यभामा के सौन्दर्य की बाढ़—जिसने आर्यपुत्र के सत्य संकल्प के पुल को ढहा दिया था—आज मुझ धीर स्वभाव वाली को भी बड़ा विचलित कर रही है।

प्रस्तुत कथन में सौत को देख कर होने वाली घबड़ाहट 'उद्वेग' है।

**सम्भ्रम**

शत्रु या सिंह आदि हिंसक पशुओं से होने वाली आशंका को 'सम्भ्रम' कहते हैं॥ ९० ॥

जैसे इसी नाटक के पञ्चम अंक में—( नेपथ्य में )

अरे मेरा-घोड़ा, घोड़ा; रथ, रथ, हाथी, हाथी, तरकस, तरकस,

का भीः का भीरयमहमहं हा ! त्वरध्वं त्वरध्वं
राज्ञः पुत्री बत बत हृता कामिना वल्लवेन ॥ (ल०मा० ५।४०)

अत्र स्पष्ट एव सम्भ्रमः ।

अथाक्षेपः—

गर्भबीजसमुत्क्षेपमाक्षेपं परिचक्षते ॥ ९१ ॥

यथा तत्रैव षष्ठे—कृष्णः ( सवैक्लव्यम् )

निखिलसुहृदामर्थारम्भे विलम्बितचेतसा,
मसृणितशिखो यः प्रासोद्ऽभूद् मनागिव मार्दवम् ।
स खलु ललितासान्द्रस्नेहप्रसङ्गघनीभवन्
पुनरपि बलादिन्धे राधावियोगमयः शिखी ॥
( ल० मा० ६।४३ )

अस्य सुहृदर्थसम्पादने गर्भितस्य पुनः ललितादर्शने[1]नोत्क्षेपादाक्षेपः ।

---

धनुष, धनुष, तलवार, तलवार आदि के अतिरिक्त—ये मैं आया, अब डर नहीं, अरे जल्दी करो जल्दी करो, इस कामी ग्वाले ने महाराज की कुमारी का हरण कर लिया ।

उपर्युक्त वर्णन में आशंका-भगदड़ आदि के कारण 'सम्भ्रम' स्पष्ट है ।

आक्षेप—( आक्षिप्ति )

गर्भित बीज को प्रकट करना या उसका विकास करना 'आक्षेप' कहलाता है ॥ ६१ ॥

जैसे इसी नाटक के षष्ठ अंक में—

श्रीकृष्ण—( घबड़ाते हुये ) अपने सम्बन्धी और मित्रों के कार्यों में चित्त के लगे रहने से जिस राधा की वियोगाग्नि की ज्वालायें (थोड़ी) धीमी पड़ गयी थीं वे इस ललिता के घने स्नेह के प्रसंग से गहरी होकर फिर से जल उठी हैं और अब मुझे भी जला रही हैं ।

प्रस्तुत अंश में मित्रों के कार्य के करने के समय हृदय में छिपे हुये राधा के अनुराग को ललिता के दर्शन से प्रकट कर देने के कारण 'आक्षेप' है ।

---

१. दर्शनोत्क्षेपादिति ख० पु० पाठः ।

अथ विमर्शसन्धिः—

यत्र प्रलोभनक्रोधव्यसनाद्यैर्विमृश्यते ।
[1]बीजवान् गर्भनिर्भिन्नः स विमर्श[2] इतीर्यते ॥ ९२ ॥
प्रकरीनियताप्त्यानुगुण्याद[3]त्राङ्गकल्पनम् ।
बकुला-नववृन्दादिप्रलोभनवशाद्यथा ॥ ९३ ॥
देवी शङ्कादितश्चात्र प्रेमबीजविमर्शनम् ।
राधामाधवयोः प्रोक्तं स्फुटं ललितमाधवे ॥ ९४ ॥
अववादोऽथ सम्फेटो विद्रवद्रवशक्तयः ।
[4]द्युतिप्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥
प्ररोचना विवलनमादानं स्युस्त्रयोदश ॥ ९५ ॥

अथाववादः—

दोषप्रख्याववादः स्यात्,

---

**विमर्श सन्धि**[1]

जब गर्भसन्धि में विकसित बीजार्थ को प्रलोभन, क्रोध, दुर्गति ( व्यसन ) आदि के द्वारा विकसित करते हुये स्थिर किया जाये तो 'विमर्शसन्धि' समझना चाहिये ॥ ९२ ॥

इस सन्धि में प्रकरी तथा नियताप्ति के अंगों को आवश्यकतानुसार रखना चाहिये। जैसे ललितमाधव नाटक में बकुला और नववृन्दा के प्रलोभन और देवी आदि की आशंका से राधा और माधव के पारस्परिक अनुरागरूपी बीजार्थ का विकसित होना 'विमर्श' है ॥ ९३–९४ ॥

इस सन्धि के तेरह अङ्ग होते हैं। यथा—( १ ) अव( प )वाद, ( २ ) सम्फेट, ( ३ ) विद्रव, ( ४ ) द्रव, ( ५ ) शक्ति, ( ६ ) द्युति, ( ७ ) प्रसंग, ( ८ ) छलन, ( ९ ) व्यवसाय, ( १० ) विरोधन,[2] ( ११ ) प्ररोचना, ( १२ ) विवलन[3] तथा ( १३ ) आदान ॥ ९५ ॥

**अववाद**—( किसी के ) दोषों को बतलाना 'अववाद' कहलाता है।

---

१. नाट्यशास्त्र में इसका 'अवमर्श सन्धि' नाम मिलता है।

२. विरोधन के स्थान पर रसार्णवसुधाकर में 'निरोधन' पाठ मिलता है।

३. रसा० तथा दशरूपक में विवलनम् के स्थान पर विचलनम् पाठ मिलता है।

---

१. बीजार्थो इति क० ख० पु० पाठः। २. विमर्ष इति ख० पु० पाठः।
३. गुण्यादत्रादि इति ख० पु० पाठः। ४. अतिप्रसङ्गो इति ब० पु० पाठः।

यथा तत्रैव—सप्तमे

राधिका—( सव्यथम् )

चिराद्द्य स्वप्ने मम विविधयत्नादुपगते
प्रपेदे गोविन्दः सखि नयनयोरक्षणभुवम् ।
गृहीत्वा हा ! हन्त त्वरितमथ तस्मिन्नपि रथं
कथं प्रत्यासन्नः स खलु पुरुषो राजपुरुषः ॥

(ल०मा०७।२२)

अत्रातुरस्य क्रौर्यकीर्त्तनादववादः ।

अथ सम्फेटः—

सम्फेटो रोषभाषणम् ।

यथा तत्रैव—

राधिका—( संस्कृतेन )

शास्तु द्वारवतीपतिस्त्रिजगतीं सौन्दर्यपर्याचितः,
किन्नस्तेन विरम्यतां कथमसौ शोकाग्निरुज्ज्वाल्यते ।
युष्माभिः स्फुटयुक्तिकोटिगरिमव्याहारिणीभिर्बला-

---

जैसे इसी नाटक के सप्तम अंक में—

राधिका—( संस्कृत-भाषा में ) अरी सखी, अनेक बार प्रयत्न करने पर बहुत दिनों बाद जब मेरी आशायें आज स्वप्न में पूरी होने लगीं और गोविन्द मेरी नेत्रों की भूमि में रक्षण प्राप्त कर चुके थे पर इतना हो चुकने पर आज रथ में बिठाकर जल्दी यहाँ से ले जाने वाला यह राजपुरुष न जाने कैसे आ धमका !

यहाँ व्यथा के कारण ( दूसरों के ) क्रूरतारूपी दोष को बतलाना 'अववाद' है ।

**सम्फेट**—क्रोध भरे वचन कहना सम्फेट है ।

जैसे इसी नाटक के सप्तम अंक में—

राधिका—( संस्कृत भाषा में )

द्वारिका के महाराज श्रीकृष्ण अपने साज सौन्दर्य आदि से पूर्ण होकर तीनों लोकों का शासन करें तो उससे हमें क्या वास्ता । इसलिये जाने दो। हमारी शोकाग्नि को क्यों भड़काया जा रहा है? क्योंकि अपनी

दाकृष्टुं व्रजराजनन्दनपदाम्भोजान्न शक्या वयम् ॥

( ल० मा० ७।२ )

अत्र बकुलां प्रति गूढदोषोक्त्या सम्फेटः ।

अथ विद्रवः—

विद्रवो वधबन्धादिः ॥ ९६ ॥

यथा तत्रैवाष्टमे—कृष्णः—प्रिये, क्षणमद्भुतमाकर्ण्यतां साम्प्रतमहं सूरसौगन्धिकमाहरिष्यन् पाण्डवेन सह खाण्डवाटवीं प्राविशम् । तत्र मृगानाहिण्डतो गाण्डीविनः श्येनाभ्यां निगृहीतयोः पक्षिणोरेकः प्राहेत्यादिः ।

अत्र पक्षिनिग्रहादिना विद्रवः ।

अथ द्रवः—

द्रवो गुरुतिरस्क्रिया ।

यथा तत्रैव—माधवी—भट्टिदारिए कासारे पसारिदणि-

---

युक्तियों द्वारा करोड़ों गौरव प्रकट करने वाली आप जैसी से बलात् हम श्रीव्रजराज के चरण-कमलों से दूर नहीं की जा सकतीं !

यहाँ व्यथा के कारण बकुला के क्रूरतारूपी गूढ़ दोष को बतलाने के कारण 'सम्फेट' है ।

**विद्रव**—वध या बन्धन प्राप्त करना 'विद्रव' कहलाता है ॥ ९६ ॥

जैसे इसी नाटक के अष्टम अंक में—

श्रीकृष्ण—'प्रिये, मैं तुम्हें ( एक ) अद्भुत घटना सुनाता हूँ । अभी मैं सूर सौगन्धिक को लाने के लिये पाण्डव ( अर्जुन ) के साथ खाण्डववन में प्रविष्ट हो गया । वहाँ शिकार ढूँढ़ते हुये पाण्डव को दो बाज मिले । उनमें से एक को पाण्डव ने पकड़ लिया । तब उन पक्षियों में से एक कहने लगा' इत्यादि ।

प्रस्तुत उदाहरण में पक्षी को पकड़ लेना 'विद्रव' है ।

**द्रव**—गुरुजन का मर्यादोल्लंघन या तिरस्कार 'द्रव' कहलाता है ।

जैसे वहीं—माधवी—व्रत धारण किये हुये तालाब के तीर पर बैठी

अव्वदं वगीं समरिअ हसामि। [ भर्तृदारिके, कासारे प्रसारित-निजव्रतां बकीं स्मृत्वा हसामि। ]

अत्र स्वामिन्या राधाया उपहासेन द्रवः।

अथ शक्तिः—

विरोधशमनं शक्तिः ॥ ९७ ॥

यथा तत्रैव—नवबृन्दा—( लतान्तरे स्थित्वा ) हन्त! कथमङ्गीकृतराधाप्रसाधना देवीयमुपलब्धा। तदेष माधवो यावदेनां राधिकां प्रतीत्य न प्रमादमादधाति तावदहं[1] पद्यमेकं हारीतेन हारयामीति।

अत्र राधात्वेन चन्द्रावलीज्ञानादुत्पन्नस्य विरोधस्य शमनात् शक्तिः।

अथ द्युतिः—

तर्जनोद्वेजने[2] द्युतिः।

यथा तत्रैव—राधा—( सभयम् ) हन्त, चंचल चंचरीअ

---

इस बगुली को देखकर मुझे हँसी आ रही है।

यहाँ अपनी स्वामिनी राधा का उपहास करने से 'द्रव' है।

शक्ति—विरोध का शान्त हो जाना 'शक्ति' कहलाता है ॥ ९७ ॥

जैसे वहीं—

नवबृन्दा—( लताओं की ओट में खड़ी होकर ) अरे! यहाँ तो श्री राधा के प्रसाधन को किये हुए महारानी मिल गई। तो जब तक इसे राधिका समझ कर माधव प्रमाद नहीं करते तब तक मैं एक पद्य इस हारीत ( शुक ) के द्वारा भिजवाती हूँ।

यहाँ राधा के रूप में चन्द्रावली का भान हो जाने से उत्पन्न हो जाने वाले वाले विरोध की शान्ति हो जाने से 'शक्ति' है।

द्युति—तर्जना या उद्वेग की प्राप्ति को 'द्युति' समझना चाहिये ॥

जैसे इसी नाटक में वहीं—

राधा—( भय से घबड़ा कर ) अरे चंचल भौंरे, जरा ठहर जा।

---

१. तावदेवाहमिति ब० पु० पाठः। २. तर्जनोत्तेजने इति अ० पु० पाठः।

चिट्ठ चिट्ठ एसा लीलाकमलेण ताडेमि तुमं धिट्ठं । [ चञ्चल-चञ्चरीक, तिष्ठ तिष्ठ एषा लीलाकमलेन ताडयामि त्वां धृष्टम् । ]

इत्यत्र भ्रमराद्युद्वेगेन भ्रमरं प्रति तर्जनेन च द्युतिः ।

अथ प्रसङ्गः—

प्रस्तुतार्थस्य शमनं प्रसङ्गः परिकीर्तितः ॥ ९८ ॥
प्रसङ्गं कथयन्त्यन्ये गुरूणां परिकीर्तनम् ॥

तत्राद्यं यथा तत्रैवाष्टमे

चर्चां सिञ्चति शोषयत्यपि मिथो विस्पर्द्धते वासकृत्
नेत्रद्वन्द्वमुरश्च यद्विरहतो बाष्पायमाणं मम ।
हन्त स्वप्नशतेऽपि दुर्लभतरप्रेक्ष्योत्सवा प्रेयसी
प्राप्योत्सङ्गमतर्कितं मम कथं सा राधिका वर्तते ॥

( ल० मा० ८।३ )

---

मैं तुझ ढीठ को अपने क्रीडाकमल से पीट कर अभी सीधा करती हूँ ।

प्रस्तुत अंश में भ्रमर आदि से उद्वेग होने या भौरें को डांटने के कारण 'द्युति' है ।

**प्रसङ्ग**

आरब्ध उद्योग या प्रयोजन का ( उपलब्धि आदि के कारण ) शान्त हो जाना 'प्रसङ्ग' कहलाता है । दूसरे विद्वान् गुरुकीर्तन को 'प्रसङ्ग' मानते हैं ॥ ९८ ॥[1]

इनमें प्रथम लक्षण के अनुसार उदाहरण इसी नाटक के अष्टम अंक में—

श्रीकृष्ण—जिसके विरह में मेरे दोनों नेत्र और हृदय चर्चा के कारण सिंचित होते हैं और परस्पर एक दूसरे को सुखाने की स्पर्द्धा करते हैं और द्रवित होकर रुँध से जाते हैं । जिसके आनन्द-विहारों का देखना स्वप्न में भी दुर्लभ हो रहा था वही मेरी प्रिया राधिका आज अतर्कित रूप में प्राप्त होकर कैसे उत्संग में अवस्थित हो गयी यही आश्चर्य है ।

---

१. नाट्यशास्त्र, ( २१।९४ ) दशरूपक ( १।४४ ) तथा साहित्यदर्पण ( ६।१०८ ) में गुरुजन का उल्लेख करना 'प्रसङ्ग' माना गया है ।

अत्र प्रस्तुतस्य विरहदुःखस्य शमात्[1] प्रसङ्गः।

द्वितीयं यथा—सप्तमे—

राधा—( संस्कृतेन )

खेलन्मञ्जुलवेणुमण्डितमुखी साचिभ्रमँल्लोचना,[2]
मुग्धे मूर्ध्नि शिखण्डिनी धृतवपुर्भङ्गीत्रयाङ्गीकृतिः।
कैशोरे कृतसङ्गतिः सुरमुनेराराध्यते शासना-
दस्माभिः पितुरालये जलधरश्यामच्छविर्देवता॥

( ल० मा० ७।२४ )

अत्रेष्टदेवनारदयोः पितुश्च कीर्तनाद्गुरुकीर्तनम्।

अथ छलनम्—

अपमानादिकरणं छलनं परिकीर्तितम्॥ ९९॥

यथाष्टमे—कृष्णः—हन्त! कलिकण्डूलतुण्डमात्रसर्वस्वे तमोमयि माधविके! विरम्यताम्। द्वयोः[3] परं जेतुमशक्येयं चन्द्रावली।

---

प्रस्तुत अंश में विरहजन्य दुःख के शान्त हो जाने से 'प्रसङ्ग' है। दूसरे लक्षण के अनुसार उदाहरण भी इसी नाटक के सप्तम अंक में—

राधा—( संस्कृत भाषा में ) देवर्षि नारद मुनि के उपदेश से, मेरे पिताजी के घर घनश्याम वर्ण वाले उस देवता की प्रतिमा का पूजन किया जाता है जो बाँसुरी से अपना मुँह सुन्दरतापूर्वक सटाये हुए होकर क्रीडा कर रही है, जिसके नेत्र चंचल हैं, भोले मुँह पर मोरपंख का मुकुट धारण किये है तथा जो त्रिभंगी से अपना शरीर अलंकृत किये है और सदा किशोर अवस्था में रहनेवाली है।

प्रस्तुत अंश में इष्टदेव, नारद तथा पिता जैसे गुरुजन का उल्लेख करने से 'प्रसंग' है।

छलन—अपमान आदि करना 'छलन' कहलाता है॥ ९९॥

जैसे इसी नाटक के अष्टम अंक में—

श्रीकृष्ण—अरे, कलि के कण्डूलन में अपने को सब कुछ समझ

---

१. शमः प्रसङ्गः ब० पु० पाठः। २. भ्रमुँल्लेखनेति ब० पु० पाठः।
३. त्वयेति ब० पु० पाठः।

अत्र माधवीभर्त्सनापमानाच्छलनम् ।

अथ व्यवसायः—

व्यवसायस्तु सामर्थ्यस्याख्यापनमुदीर्यते ॥ १०० ॥

यथा सप्तमे—राधिका—( सन्निवृत्य[1] सलज्जं संस्कृतेन )

कंसारेरवलोकमङ्गलविनाभावादधन्येधुना,
बिभ्राणा हतजीविते प्रणयितां नाहं सखि, प्राणिमि ।
क्रूरेयं न विरोधिनी यदि भवेदाशामयी शृङ्खला,
प्राणानां ध्रुवमर्बुदान्यपि तस्य त्यक्तुं सुखेनोत्सहे ॥

( ल० मा० ७।१३ )

अत्र प्राणार्बुदत्यागार्थसामान्यकथनाद् व्यवसायः। कश्चित्तु—'व्यवसायस्तु विज्ञेयः प्रतिज्ञाहेतुसम्भवः' इत्याह ।

---

लेनेवाली नासमझ माधविके ! जरा ठहर जा। तुम दोनों से यह चन्द्रावली जीती नहीं जा सकेगी।

यहाँ माधवी को डाँट कर अपमानित करना 'छलन' है।

**व्यवसाय**—अपनी शक्ति का बखान करना 'व्यवसाय'[1] कहलाता है ॥ १०० ॥

जैसे इसी नाटक के सप्तम अंक में—

राधिका—( लौटकर संस्कृत भाषा में ) अरी सखी, आज मैं कंस के विनाशक श्रीकृष्ण के अवलोकन स्वरूप मंगल को पाये बिना अभागिन होकर प्रेमभाव को धारण किये हुए केवल इन दुष्ट प्राणों को स्थिर रखने के लिये साँसें नहीं ले रही हूँ। यदि क्रूर और आशामयी शृंखला इनके विरुद्ध न होती तो असाध्य अर्बुद रोग के समान इन प्राणों को मैं अति प्रसन्न हो छोड़ने को उद्यत हो जाती।

यहाँ प्राणों को असाध्य अर्बुदरोग से बतला कर सर्वसाधारण बात को कहकर अपने सामर्थ्य का बखान करने से 'व्यवसाय' है।

---

१. नाट्यशास्त्र में अपनी प्रतिज्ञा में दोष उत्पन्न होना 'व्यवसाय' माना है। व्यवसायस्तु विज्ञेयः प्रतिज्ञादोषसम्भवः। २१।९४ तथा दर्पण ने प्रतिज्ञा के कारण होने वाला कार्य व्यवसाय माना है (द्रष्टव्य—सा० दर्पण—व्यवसायस्तु विज्ञेयः प्रतिज्ञाहेतुसम्भवः। ६।११२)

---

१. निवृत्त्येति ब० पु० पाठः।

यथा तत्रैव सप्तमे—राधिका—( संस्कृतेन )

यस्योत्तंसः[1] स्फुरति चिकुरे केकिपत्रप्रणीतो
हारः कण्ठे विलुठति कृतः स्थूलगुञ्जावलीभिः।
वेणुर्वक्त्रे रचयति रुचिं हन्त चेतस्ततो मे
रूपं विश्वोत्तरमपि हरेर्नान्यदङ्गीकरोति॥

( ल० मा० ७।६ )

अथ विरोधनम्—

**विरोधनं विरोधोक्तिः संरब्धानां परस्परम्॥ १०१॥**

यथाष्टमे—चन्द्रावली ( सोल्लुण्ठस्मितम् ) अइ लोलुहे आलि, कीस मं अनापेक्खिअ[2] तं णिअमहाव्वदं तुए सुट्ठु पडिट्ठिदम्। [ अयि लोलुपे आलि, कस्मान्मामनापृच्छ्य तन्निजमहाव्रतं त्वया सुष्ठु प्रतिष्ठितम्। ]

---

दूसरे विद्वान् ( विश्वनाथ कवि० साहि० दर्प० ६।११२ ) प्रतिज्ञा के कारण किये जानेवाले कार्य को 'व्यवसाय' कहते हैं।

जैसे इसी नाटक के सप्तम अंक में—

राधिका—( संस्कृत भाषा में ) जिनके केशों पर मोरपंखों का मुकुट सुशोभित हो रहा है, गले में मोटी गुंजा की माला हिल रही है, जिनके मुँह लगने से बाँसुरी शोभा बढ़ा रही है उसी श्रीहरि की अलौकिक छवि की स्तुति करने वाला मेरा मन अब अन्य स्वरूप को स्वीकार करना नहीं चाहता है।

**विरोधन**—क्रोध में आकर परस्पर विरोधी वचन कहना 'विरोधन' कहलाता है॥ १०१॥

जैसे इसी नाटक के अष्टम अंक में—

चन्द्रावली—( मुसकुरा कर ताना देती हुई ) अरी ( अति ) चंचला सखी, मुझसे बिना पूछे अपने इस महाव्रत को तूने अच्छी तरह जमा लिया है।

---

१. यस्योत्तंसं स्फुरति चिकुरे केकिपुच्छप्रणीतो इति ब० पु० पाठः।

२. अनामंतिअ इति ख० पु० पाठः।

राधिका—देइ, सरण्णस्स जणस्स संरक्खणे अक्खमासि तहवि परिहसेसि। णूणं ईसरीणां क्खु जुत्तं एदं। [ देवि, शरण्यस्य जनस्य संरक्षणेऽक्षमासि तथापि परिहससि। नूनमीश्वरीणां खलु युक्तमेतत्। ]

अत्र निगूढसरम्भयोश्चन्द्रावलीराधयोः विरोधोक्त्या विरोधनम्।

अथ प्ररोचना—

सिद्धवद्भाविनोऽर्थस्य सूचनात् स्यात्प्ररोचना ॥ १०२ ॥

यथा तत्रैव सप्तमे—

नवबृन्दा—

अलं विलापैः समयक्रमस्य
दुरूहरूपा गतयो भवन्ति।
शरन्मुखे पश्य सरस्तटीषु
खेलन्त्यकस्मात् खलु खञ्जरीटाः॥ (ल०मा० ७।५)

इत्युत्र खञ्जरीटदृष्टान्तेन भाविकृष्णसङ्गमस्य सूचनात् प्ररोचना।

---

राधिका—देवी, तुम अपने रक्ष्यजन का संरक्षण करने में असमर्थ रही। फिर भी इस प्रकार परिहास कर रही हो। ठीक है, समर्थ के लिये ऐसा ही उचित होता है।

प्रस्तुत अंश में छिपे हुए क्रोध में आकर चन्द्रावली और राधा का परस्पर विरोधी वचन कहना 'विरोधन' है।

प्ररोचना—भावी अर्थ ( घटना ) को घटित होते हुए बतलाना या सूचित करना 'प्ररोचना' कहलाता है ॥ १०२ ॥

जैसे इसी नाटक के सप्तम अंक में—

नवबृन्दा—अब रोना बन्द करो। समय की गति और क्रम बड़े दुरूह होते हैं। देखो, शरदृतु के आरम्भ होते ही सरोवर के तटों पर आकर खंजन पक्षी सहसा विहार करने लगते हैं।

प्रस्तुत अंश में खंजन पक्षी के दृष्टान्त से कृष्ण-संगम की भावी घटना को घटित रूप में बतलाने से 'प्ररोचना' है।

यद्वा तत्रैव—राधा—( संस्कृतेन )

अजनि सफलः सौख्यं भूयान् कलेवरधारणे
सहचरि परिक्लेशो योऽभून्मया किल सेवितः ।
अहह यदिमाः श्यामश्यामा पुरो मम वल्लवी-
कुलकुमुदिनीबन्धोस्तास्ताः स्फुरन्ति मरीचयः ॥

( ल० मा० ७।२७ )

अत्र प्रतिमासन्दर्शनानन्देन भाविकृष्णसङ्गमनस्य सिद्धवत् सूचनात् प्ररोचना ।

अथ विवलनम्—

आत्मश्लाघा विवलनम् ॥

यथा तत्रैवाष्टमे—कृष्णः ( सविस्मयम् ) कोऽयं माधुर्येण ममापि मनो हरन् मणिकुड्यमवष्टभ्य पुरो विराजते ? ( पुनर्निभाल्य ) हन्त ! कथमत्राहमेव प्रतिबिम्बितोऽस्मि । ( इति सौत्सुक्यम् )

---

अथवा इसी नाटक के सप्तम अंक में—

राधिका—( संस्कृत भाषा में ) अरी सखी, अब तक मैंने जो कष्ट भोगा था वह इस शरीर के धारण करने से आज सफल हो गया और अतिशय सुख प्राप्त हुआ जब मैंने श्यामवर्ण वाली ग्वालकुल-कुमुदिनी के बन्धु की प्रतिमा की शोभा-किरणों को अपने सामने प्रस्फुटित होते देखा ।

प्रस्तुत पद्य में श्रीकृष्ण की प्रतिमा के दर्शन से होनेवाले आनन्द के कारण भावी कृष्ण मिलन को घटित बतलाने से 'प्ररोचना' है ।

**विवलन**—अपनी आत्मश्लाघा करना 'विवलन' कहलाता है ।

जैसे इसी नाटक के अष्टम अंक में—

श्रीकृष्ण—( विस्मय में आकर ) यह कौन है जो अपने माधुर्य से मेरे मन को आकृष्ट कर इस मणिमय भित्ति के सहारे खड़ा हुआ है । ( फिर ध्यान से देख कर ) अरे ! यह तो मेरी ही परछाईं है । ( उत्कंठा के साथ )

अपरिकलितपूर्वः कश्चमत्कारकारी
स्फुरति मम गरीयानेष माधुर्यपूरः ।
अयमहमपि हन्त ! प्रेक्ष्य यं लब्धचेताः
सरभसमुपभोक्तुं कामये राधिकेव ॥

अत्र विस्मयेन निजरूपश्लाघनं विवलनम् । (ल० मा० ८।३४)

अथादानम्—

आदानं कार्यसङ्ग्रहः ॥ १०३ ॥

यथा तत्रैवाष्टमे—

नववृन्दा—( राधामवेक्ष्य ) हन्त ! हन्त !

आलोके कमलेक्षणस्य सजलासारे दृशौ न[1] क्षमे
नाश्लेषे किल शक्तिभागतिपृथुस्तम्भा भुजावल्लरी ।
वाणी गद्गदकुण्ठितोत्तरविधौ नालं चिरोपस्थिते
वृत्तिः कापि बभूव सङ्गमनये विघ्नः कुरङ्गीदृशः ॥ (ल० मा० ८।११)

---

अरे ! माधुर्य का यह अपूर्व तथा चमत्कार उत्पन्न करनेवाला कौन प्रवाह है जो मेरे सम्मुख उदित हो रहा है और जिसे देखकर मैं भी राधिका के समान प्रसन्नचित्त होकर उपभोगार्थ दौड़ पड़ने की इच्छा करने लगा हूँ ।

प्रस्तुत अंश में अपने ही रूप की विस्मय में आकर प्रशंसा करना 'विवलन' है ।

आदान—कार्यों का एकत्रीकरण 'आदान' कहलाता है ॥ १०३ ॥

जैसे इसी नाटक के अष्टम अंक में—

नववृन्दा—( राधा को देखकर ) अरे ! अरे ! हाय ! हाय !

ये बरसनेवाली आँखें कमलनयन हरि को देखने में समर्थ नहीं हैं, खंभे जैसी जड़ भुजा आलिंगन में तथा आरंभ में गद्गद होकर बाद में रुक जानेवाली वाणी संभाषण के लिये देर तक टिकने में समर्थ नहीं होने से इस मृगनयनी के मिलन के अवसर पर ये वृत्तियाँ उत्पन्न

---

1. लक्षये इति ख० पु० पाठः ।

अत्र कृष्णदर्शनादिरूपकार्यसङ्ग्रहादादानम् ।

कश्चित्तु विद्रवविवलन-छलनाद्यत्र न पठित्वा खेदप्रतिषेधछादनानि पठन्ति लक्षयन्ति च ।

तत्र खेदः—

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इतीर्यते ॥ १०४ ॥**

यथा तत्रैव सप्तमे—राधिका—( संस्कृतेन )

ममायासीद्दूरे दिगपि हरिसङ्गप्रणयिनी
प्रपेदे खेदेन त्रुटिरपि महाकल्पपदवीम् ।
दहत्याशासर्पिर्विरचितपदप्राणदहनो
बलान्मां दुर्लीलः कमिव करवै हन्त! शरणम् ॥ (ल०मा० ७।१)

---

होकर किसी न किसी विघ्न को उत्पन्न करने पर जैसे तुली हुई हैं ।

प्रस्तुत अंश में श्रीकृष्ण के दर्शनरूप कार्य का एकत्र (ग्रहण करने) से 'आदान' है ।

किसी आचार्य (विश्वनाथ कविराज आदि) ने विद्रव[1], विवलन और छलन के स्थान पर खेद, प्रतिषेध तथा छादन मानकर उनके लक्षण दिये हैं । क्रमशः दिये जानेवाले इन लक्षणों में 'खेद' का लक्षण इस प्रकार है—

**खेद**—मानसिक चेष्टाओं या कार्यों से होनेवाली थकावट को 'खेद' समझना चाहिये ।। १०४ ।।

जैसे इसी नाटक के सप्तम अंक में—

राधिका—( संस्कृत भाषा में ) श्रीहरि के मिलन की आशा में यह दिशा मुझे दूर तक खींच लायी और थकावट के कारण पगडंडी भी छूट गयी । इधर शरीर में टिका हुआ दुर्लील एवं दाहक यह प्राण आशारूपी घृत को बलात् भस्म किये दे रहा है । हाय ! इस समय किसकी शरण लूँ ( जिससे इस विपत्ति से त्राण मिले । )

---

१. नाट्यशास्त्र तथा साहित्यदर्पण में भी द्रव, छलन और विवलन के स्थान पर खेद, प्रतिषेध तथा छादन मिलते हैं ।

अथ प्रतिषेधः—

ईप्सितार्थप्रतीघातः प्रतिषेध इतीर्यते ॥ १०५ ॥

राधा—( समीक्ष्य सखेदमात्मगतम् ) कहं इंदीअरेण रहंगीए संगमिङ्कं अहिणंदिदे मच्छरा कलहंसी मिलिदा । [ कथमिन्दीवरेण रथाङ्ग्या सङ्गमितुमभिनन्दिते मत्सरा कलहंसी मिलिता । ]

अत्र देव्यागमनात् कृष्णसङ्गप्रतीघातः ।

अथ छादनम्—

कार्यार्थमपमानादेः सहनं छादनं मतम् ॥ १०६ ॥

यथा सप्तमे—नववृन्दा—( प्रविश्य ) सखि, मा विषादं कृथाः पश्य—

पादे निपत्य बदरीमवलम्बमाना
कान्तं रसालमनुविन्दति माधवीयम् ।

---

प्रतिषेध—इष्ट अर्थ में विघ्न उपस्थित हो जाना 'प्रतिषेध' कहलाता है ॥ १०५ ॥

जैसे—

राधिका—( ध्यान से देखकर दुःखी होती हुई मन में ) अरे ! इस कमल के साथ चकवी के मिलन के अवसर पर बीच में ही यह मत्सरिणी कलहंसी कैसे आ गयी ?

प्रस्तुत अंश में महादेवी के कारण श्रीकृष्ण के साथ राधिका के मिलन में विघ्न आ जाने से 'प्रतिषेध' स्पष्ट है ।

छादन—कार्यवश अपमान आदि को सहन करना 'छादन' कहलाता है ॥ १०६ ॥

जैसे इसी नाटक के सप्तम अंक में—

नववृन्दा—( आकर ) अरी सखी, तुम क्यों संताप कर रही हो । देखो—

यह माधवी लता इस बदरीवृक्ष का सहारा लेती हुई पैरों तक झुककर अनुनय द्वारा अपने इष्ट रसालवृक्ष को प्राप्त कर रही है क्योंकि

प्राणेशसङ्गमविधौ विनिविष्टचित्ता
नो पारवश्यकदनं मनुते हि साध्वी ॥ (ल०मा०७।३)

अत्र स्पष्टमेव छादनम्।

अथ निर्वहणसन्धिः—

मुखसन्ध्यादयो यत्र विकीर्णा बीजसंयुताः।
महत्प्रयोजनं यान्ति तन्निर्वहणमुच्यते ॥ १०७ ॥
अत्राङ्गकल्पनाकार्यफलागमसमागमात् ।
राधादीनां तु सर्वासां कुमारीणामवाप्तितः ॥ १०८ ॥
उद्वाहाद्युत्सवः प्रोक्तो यथा ललितमाधवे।
सन्धिर्विरोधो ग्रथनं निर्णयः परिभाषणम् ॥ १०९ ॥
प्रसादानन्दसमयाः कृतिर्भाषोपगूहने।
पूर्वभावोपसंहारौ प्रशस्तिश्च मनीषिभिः ॥ ११० ॥
इति निर्वहणस्याङ्गान्युक्तान्यस्य चतुर्दश।

---

प्रियमिलन का दृढ़ संकल्प कर अपना मन उसी में लगाने वाली पतिव्रता परवश होने पर भी दुःख को नहीं गिनती !।

प्रस्तुत कथन में छादन स्पष्ट ही है।

**निर्वहणसन्धि**—जब मुख आदि में विकीर्ण बीज सुसम्बद्ध होकर मुख्य उद्देश्य की पूर्ति करे तो उसे 'निर्वहणसन्धि' समझना चाहिये ॥

इस सन्धि में कार्य और इष्ट प्राप्ति को ध्यान में रखकर इसके अंगों का निवेश करना चाहिये। ललितमाधव नाटक में राधा आदि कुमारियों की श्रीकृष्ण को प्राप्ति तथा विवाह आदि उत्सव होना 'निर्वहण-सन्धि' है ॥ १०८ ॥

इस सन्धि के चौदह अंग होते हैं। यथा—( १ ) सन्धि, ( २ ) विरोध, ( ३ ) ग्रथन, ( ४ ) निर्णय, ( ५ ) परिभाषण, ( ६ ) प्रसाद, ( ७ ) आनन्द, ( ८ ) समय, ( ९ ) कृति, (१०) भाषा, (११) उपगूहन, (१२) पूर्वभाव, ( १३ ) उपसंहार तथा ( १४ ) प्रशस्ति ॥१०९–११०३॥

---

१. प्रथनमिति अ० पु० पाठः।

तत्र सन्धिः

बीजोपगमनं सन्धिः—

यथा तत्रैव नवमेऽङ्के—कृष्णः—

निह्नुतामृतमाधुरी-परिमलः कल्याणि बिम्बाधरो
वक्त्रं पङ्कजसौरभं कुहरितश्लाघाभिदस्ते गिरः।
अङ्गश्चन्दनशीतलस्तनुरियं सौन्दर्यसर्वस्वभाक्
त्वामासाद्य ममेदमिन्द्रियकुलं राधे मुहुर्मोदते ॥ (ल० मा० ९।९)

अत्रानुरागबीजोपगमनात् सन्धिः।

अथ विरोधः—

—विरोधः कार्यमार्गणम् ॥ १११ ॥

यथा तत्रैव नवमांके—नववृन्दा—

---

सन्धि—बीजार्थ की प्राप्ति होना 'सन्धि' कहलाता है।

जैसे इसी नाटक के नवम अंक में—

श्रीकृष्ण—अरी भद्रे राधिके, तुम्हारे बिम्बाधर अमृत की मधुरिमा को परास्त करनेवाले, तुम्हारा कमल जैसी सुवास लिये हुए मुख और तुम्हारी वाणी कोकिला की कीर्ति को ध्वस्त करनेवाली है। तुम्हारा शरीर चन्दन जैसा शीतल है। इस प्रकार तुम्हारा यह शरीर सौन्दर्य की सारी सम्पत्तियाँ धारण किये हुए है। इस समय तुम्हें पाकर मेरे सम्पूर्ण अवयव मुदित हो रहे हैं।

प्रस्तुत पद्य में श्रीराधा के प्रति श्रीकृष्ण के अनुरागरूपी बीजार्थ की उपलब्धि होने से 'सन्धि' है।

विरोध—इष्ट कार्य या वस्तु की तलाश करना 'विरोध' कहलाता है ॥ १११ ॥

जैसे इसी नाटक के नवम अंक में—

---

१. कलरुत इति ख० पु० पाठः।

२. बीजोपगमादिति ख० पु० पाठः।

माधवीविरहितां मधुवीरः कुण्डिनेश्वरसुतां निशमय्य ।
नन्दयन्स्फुरदमन्दविलासैर्हासकन्दललसन्मुखमाह ॥
सत्याख्यस्य विलोकाय लोकस्यात्मभुवार्थितः ।
प्रतिष्ठासुरहं देवि तत्रानुज्ञा विधीयताम् ॥ (ल०मा०६।७,८)
अत्र राधासङ्गमकार्यस्य मार्गणाद्विरोधः ।

अथ ग्रथनम्—

ग्रथनं सदुपक्षेपः,
यथा तत्रैव राधिका—( कृष्णं पश्यन्ती )

अंजलिमेत्तं सलिलं सभरीए अहिलसंतीए ।
ओवरि सअं णअजलदा धारावरिसी समुल्लसई ॥ (ल०मा०६।१६)
[ अञ्जलिमात्रं सलिलं शफर्या अभिलषन्त्या ।
उपरि स्वयं नवजलदो धारावर्षी समुल्लसति ॥ ]

---

नववृन्दा—माधवी से रहित कुण्डिनेश्वर पुत्री ( राधा ) का समाचार पाकर अतिशय प्रसन्न हो विलास, हाव आदि से मुसकराते हुये ( सुशोभित होकर ) माधव बोले—

देवि, मैं ब्रह्मा के द्वारा ( मनोभू या काम ) प्रार्थना किये जाने के कारण आज सत्यलोक ( सत्यभामा ) के अवलोकनार्थ जा रहा हूँ । तुम मुझे आज्ञा दो ।

उपर्युक्त अंश में श्री राधा से मिलनरूपी कार्य की गवेषणा करने से 'विरोध' समझना चाहिये ।

**ग्रथन**—( उत्तम रूप में ) इष्टार्थ की उपलब्धि का आरम्भ होना 'ग्रथन' कहलाता है ।

जैसे इसी नाटक में—

श्री राधा—( श्रीकृष्ण को देखती हुई ) इस मछली के द्वारा अपने जीवन के लिये एक अञ्जलि पानी की कामना की गयी थी । परन्तु उसकी कामना की पूर्ति के लिये यह नवमेघ स्वयं धारावर्षण करते हुये सुशोभित हो रहा है ( या उदित हो रहा है । )

अत्र पुनः सहसा कृष्णदर्शनरूपस्य सदर्थस्योपक्षेपाद् ग्रथनम् ।

अथ निर्णयः—

निर्णयस्त्वनुभूतोक्तिः ॥ ११२ ॥

यथा तत्रैव—कृष्णः—

नवमदनविनोदैः केलिकुञ्जेषु राधे
निमिषवदुपरामं काममासेदुषीनाम् ।
उपचितपरितोषप्रोषितापत्रपाणां
स्मरसि किमिव तासां शारदीनां क्षपाणाम् ॥ (ल० मा० ६।४३)

अत्र स्पष्ट एव निर्णयः ।

अथ परिभाषणम्—

परिभाषा मिथो जल्पः परिवादोऽथवा भवेत् ॥ ११३ ॥

तत्राद्यं यथा तत्रैव—

मधुमङ्गलः—भोदि किं ति आअदासि ? [ भवति किमित्यागतासि ? ]

---

प्रस्तुत अंश में श्रीकृष्ण के दर्शनरूपी इष्टार्थ की अकस्मात् उपलब्धि ( का आरम्भ ) होने से 'ग्रथन' है ।

**निर्णय**—अनुभवपूर्ण उद्गार को 'निर्णय' समझना चाहिये ॥ ११२ ॥

जैसे इसी नाटक में—

श्रीकृष्ण—अरी राधे, नये नये विनोद और कीड़ाओं से हटकर कुछ क्षणों तक ( पलक मारते हुये ) यथेष्ट विश्राम देने वाली एवं आह्लादाधिक्य के कारण लज्जा को दूर कर देने वाली उन शरद ऋतु की रात्रियों की क्या तुम्हें याद आती है ?

यहाँ 'निर्णय' स्पष्ट है ।

**परिभाषण**—परस्पर विवाद या निन्दा (आदि) करना 'परिभाषण' कहलाता है ॥ ११३ ॥

इनमें प्रथम प्रकार ( परस्पर विवाद ) का उदाहरण इसी अंक में—

मधुमंगल—अरे आप यहाँ क्यों आयी हैं ?

सुकण्ठी—इमस्स पण्होत्तरस्स सदिक्खं अण्णं त्रि महुरं सुणिदुम् [ अस्य प्रश्नोत्तरस्य सदृक्षमन्यदपि मधुरं श्रोतुम् । ]

मधुमङ्गलः—भोदि ! पण्णोत्तरं वि तुए सुणिदम् ? [ भवति, प्रश्नोत्तरमपि त्वया श्रुतम् ? ]

सुकण्ठी—ण केअणं इदं ज्जेव । [ न केवलमिदमेव । ]

मधुमङ्गलः—अवरं किं ? [ अपरं किम् ? ]

सुकण्ठी—जा किं पि दिट्ठं तं गदुअ देइए णिवेदिस्सं । [ यत् किमपि दृष्टं तद्गत्वा देव्यै निवेदयिष्यामि । ]

अत्र विदूषकसुकण्ठयोर्मिथो जल्पः । द्वितीयो यथा तत्रैव—

मधुमङ्गलः—( संस्कृतेन )

अयि विषकण्ठीकठिने किमिति सुकण्ठीति भण्यते चेटि ।
अथवा का मम शस्ता भद्रेत्यभिधीयते विष्टिः ॥ (ल०मा० ६।२१)

---

सुकंठी—इस प्रकार के प्रश्न और उत्तर के समान और भी कुछ मधुर शब्दों को सुनने के लिये ।

मधुमंगल—अच्छा, तो आपने प्रश्न और उत्तर भी सुने थे ।

सुकंठी—सिर्फ इतना ही नहीं ।

मधुमंगल—तो फिर और क्या ( सुना ) ?

सुकंठी—सुना और जो भी देखा उसे अब मैं महारानी को जाकर बतलाती हूँ ।

उपर्युक्त अंश में विदूषक और सुकंठी का परस्पर विवादपूर्ण संभाषण होने से 'परिभाषण' है ।

दूसरे प्रकार ( निन्दा से होनेवाले परस्पर विवाद ) का उदाहरण—

मधुमंगल—( संस्कृत भाषा में बोलते हुए ) अरी कठोरहृदये दासी तुम्हारा कंठ तो विष से भरा हुआ है पर यों ही तुम्हें सुकंठी कहा जा रहा है । इसमें ( मेरी ) व्यर्थ प्रशंसा से क्या होगा । क्योंकि संसार में अमङ्गल या अप्रशस्त विष्टि तिथि को भी भद्रा कहा जाता है ।

अत्र सुकण्ठ्याः दोषदर्शनात् परीवादः ।

अथ प्रसादः—

शुश्रूषाद्युपसम्पन्ना यत्प्रसादः प्रसन्नता ॥ ११४ ॥

यथा नवमे—कृष्णः ( सहर्षम् ) सुकण्ठिके, बाढमस्मिन्नर्थे दुष्करस्ते मया निष्क्रयः ।

अत्र श्रीकृष्णस्य प्रसादः स्पष्ट एव ।

अथानन्दः—

आनन्दोऽभीष्टसम्प्राप्तिः,

यथा तत्रैव—दशमे

नयनयोः स्तनयोरपि युग्मतः परिपतद्भिरसौ पयसां झरैः ।
अहह वल्लवराजविलासिनी स्वतनयं प्रणयादभिषिञ्चति ॥

अत्र यशोदाया आनन्दः । यथा वा तत्रैव—

कृष्णः—( सानन्दम् ) चिरेणाद्य गोकुलवासिनामिवात्मानमभिमन्यमानः प्रमोदमुग्धोऽस्मि ।

---

यहाँ सुकण्ठी के दोष प्रदर्शन के द्वारा निन्दा होने से 'परिभाषण' स्पष्ट है।

**प्रसाद**—शुश्रूषा आदि से प्रसन्न करना 'प्रसाद' कहलाता है ॥११४॥

जैसे इसी नाटक के नवम अंक में :—

श्रीकृष्ण—( प्रसन्न होकर ) सुकंठिके, इस कठिन कार्य को करने के उपलक्ष्य में मेरे द्वारा कोई भी निष्क्रय देना कठिन है।

उपर्युक्त कथन में श्रीकृष्ण की प्रसन्नता प्रकट होने से 'प्रसाद' है।

**आनन्द**—इष्ट पदार्थ की उपलब्धि होना 'आनन्द' कहलाता है।

जैसे इसी नाटक के दशम अंक में :—

ओहो ! यह गोपालों की महादेवी यशोदा अपने नेत्र एवं उरोज युगल से गिरने वाली पय ( जल, दूध ) की धाराओं से वात्सल्य के कारण अपने पुत्र को अभिषिक्त कर रही हैं।

यहाँ यशोदा जी को इष्टप्राप्ति होने से 'आनन्द' है।

अथवा इसी अंक में—

श्रीकृष्ण—( प्रसन्न होकर ) आज कई दिनों बाद मैं स्वयं को गोकुलवासी मानकर आनन्द से मूढ़ हो रहा हूँ।

अत्र कृष्णस्यानन्दः ।

अथ समयः—

समयो दुःखसङ्क्षयः ॥ ११५ ॥

यथा तत्रैव—दशमे

राधिका—( मुखादञ्चलमपास्य, सविक्रोशम् ) हा हा कधं पिअसही मे ललिदा । हा कधं वच्छला भअवदी । हा कधं अज्जिआ मुहरा । [ हा हा, कथं प्रियसखी मे ललिता । हा कथं वत्सला भगवती । हा कथमार्या मुखरा । ] ( इत्यानन्देन घूर्णन्ती भूमौ स्खलति । )

अत्र सुहृद्दर्शनाद्राधाया दुःखसंक्षयः ।

अथ कृतिः—

लब्धार्थस्य कृतिः स्थैर्यम् ,

यथा तत्रैव—चन्द्रावली—( जनान्तिकम् ) भअवदि, वहिणीए करं गेण्हिदुं मह वअणेण अब्भत्थीअदु······अज्जउत्तो । [भगवति, भगिन्याः करं ग्रहीतुं मम वचनेन अभ्यर्थ्यतामार्यपुत्रः ।]

---

यहाँ श्रीकृष्ण की प्रसन्नता होने से 'आनन्द' है ।

**समय**—दुःखों की समाप्ति हो जाना 'समय' कहलाता है ॥ ११५ ॥

जैसे इसी नाटक के दसवें अंक में—

राधिका—( अपने मुँह से आँचल हटाकर रोती हुई ) हाय ! हाय ! यह तो मेरी प्रिय सखी ललिता है और इधर मुझ पर स्नेह रखने वाली देवी, आर्या मुखरा है (आनन्द से चकरा कर पृथ्वी पर लड़खड़ाती है)।

यहाँ मित्रमण्डली को देखने से राधा के दुःखों का नाश हो जाने से 'समय' है ।

**कृति**—प्राप्त होने वाले पदार्थ का स्थिर हो जाना 'कृति' कहलाता है ।

जैसे इसी नाटक में—

चन्द्रावली—( जनान्तिक के द्वारा ) भगवती, इस बहिन का कर-ग्रहण करने की आप आर्यपुत्र से मेरी ओर से प्रार्थना करें ।

---

१. निजसुहृदिति क० पु० पाठः ।

अत्र यशोदादिसमागमाल्लब्धस्य राधिकारूपार्थस्य चन्द्रावलीप्रार्थनेन स्थैर्यङ्कृतिः ।

अथ भाषणम्—

मानाद्याप्तिश्च भाषणम् ॥ ११६ ॥

यथा तत्रैव—

( भगिन्यौ पौर्णमासीमन्तराकृत्य गोपेन्द्रं प्रणमतः )

नन्दः—वत्से, परस्परस्य प्राणाधिक्यं भजन्त्यौ सौभाग्यवत्यौ भूयासम् ।

अत्र नन्दकृताशीर्वादादिमानप्राप्त्या भाषणम् ।

अथोपगूहनम्—

अद्भुतार्थपरिप्राप्तिरुपगूहनमुच्यते ॥ ११७ ॥

यथा तत्रैव—

राधा—( सर्वासां पादानभिवाद्य सोत्कण्ठम् ) कुसलिणी किं मे वहिणी चन्द्राअली। [कुशलिनी किं मे भगिनी चन्द्रावली ।]

---

यहाँ यशोदा आदि के मिलन होने पर उपलब्ध राधिका के चन्द्रावली की प्रार्थना द्वारा स्थिर हो जाने के कारण 'कृति' समझना चाहिये।

**भाषण**—सम्मान आदि की प्राप्ति होना 'भाषण' कहलाता है ।

जैसे इसी ( नाटक के दसवें अंक ) में—

( दोनों बहिनें पौर्णमासी को बीच में रखकर नन्द जी को प्रणाम करती हैं )।

नन्द—बच्चियों, तुम एक दूसरे की प्राणाधिक बन कर सौभाग्यशालिनी बनी रहो ।

यहाँ नन्दजी के आशीर्वाद द्वारा सम्मान प्राप्त करने से 'भाषण' है।

**उपगूहन**—अपूर्व अर्थ की पूर्णतः प्राप्ति हो जाना 'उपगूहन' कहलाता है ॥ १०२ ॥

जैसे वहीं—

श्री राधा—( सभी के चरणस्पर्श कर उत्कंठा पूर्वक ) क्या मेरी बहिन चन्द्रावली सानन्द हैं ?

चन्द्रावली—( गाढं परिष्वज्य ) वहिणी एसाम्हि दुज्जणी-हतचन्दाअलिआ। ( भगिनि, एषास्मि दुर्जनी हतचन्द्रा-वलिका। ] ( इति रोदिति )

राधिका—( सानन्दं ससम्भ्रमं पादयोः पतन्ती ) हद्धि, हद्धि, विडम्बिदम्हि हददेव्वेण। [ हा धिक्, हा धिक्, विडम्बि-तास्मि हतदैवेन। ]

अत्रादृष्टपूर्वयोर्भगिन्योः परस्परालिङ्गनाद्यद्भुतार्थपरिप्राप्ति-रुपगूहनम्।

अथ पूर्वभावः—

मुख्यकार्यस्य संसर्गः पूर्वभावः प्रकीर्तितः॥ ११८॥

यथा तत्रैव—पौर्णमासी—यशोदामातः, उपस्थितोऽयं सर्वोऽभिषेकसम्भारः। तदलङ्क्रियतां प्रथमं राधया सह पर्ववेदी ततः क्रमेण कुमारीभिश्च।

अत्र मुख्यकार्यस्य राधामाधवयोः परिणयमहोत्सवस्य संसर्गात् पूर्वभावः।

---

चन्द्रावली—( गाढ़ आलिंगन करती हुई ) बहिन, यह रही मैं दुष्टा चन्द्रावली।

श्री राधा—(आनन्द और घबड़ाहट में आकर पैरों पर गिरती हुयी) हाय ! हाय ! धिक्कार है। मैं दुर्भाग्य से इस विडम्बना में आ पड़ी हूँ।

यहाँ एक दूसरे को न पहिचानने वाली दो बहिनों को मिलन रूपी अद्भुत अर्थ की उपलब्धि हो जाना 'उपगूहन' है।

पूर्वभाव—मुख्य कार्य से सम्बन्ध हो जाना 'पूर्वभाव' कहलाता है।

जैसे वहीं—पौर्णमासी—हे यशोदानन्दन, अभिषेक की सारी सामग्री आ चुकी है। इसलिये इस वेदिका पर तुम पहिले राधिका के साथ बैठ जाओ और फिर क्रमशः कुमारियाँ बैठें।

यहाँ राधा और कृष्ण के विवाह-महोत्सव रूपी मुख्य कार्य से सम्बन्ध होने के कारण 'पूर्वभाव' है।

केचित् पूर्ववाक्यं केचित् पूर्वभाषामिति पठन्तो लक्षयन्ति—'पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शकम्' ।

यथा तत्रैव—( नेपथ्ये )

विनीते राधायाः परिणयविधानानुमतिभिः,
स्वयं देव्या तस्मिन् पितुरिह निबन्धे मुदितया ।
कुमारीणां तासामयमुपनयन् षोडश कृती
सहस्राणि स्मेरः प्रविशति शताढ्यानि गरुडः ॥ (ल० मा० १०।३१)

अत्र पूर्वं कृष्णेन तृतीयाङ्के यदुक्तं 'एतास्तूर्णं नयत कियतीरि'त्यादिना पुनः स्वयं गमनम् तस्यैवोपदर्शनम् ।

अथोपसंहारः—

कृतार्थतोपसंहारः सर्वाभीष्टोपलक्षितः[1] ॥ ११९ ॥

यथा तत्रैव—दशमे—

---

कुछ विद्वान् 'पूर्वभाव' के स्थान पर 'पूर्ववाक्य' और कुछ 'पूर्वभाषा' मानते हैं । इनके मत में—'उपयुक्त या यथोक्त अर्थ को बतलाना 'पूर्ववाक्य' कहलाता है' ।

जैसे इसी अंक में ( नेपथ्य में ) श्री राधा के शान्त ( या प्रसन्न ) हो जाने तथा महादेवी रुक्मिणी के द्वारा विवाह की स्वयं स्वीकृति दे देने पर एवं पिता के द्वारा लगाये गए प्रतिबन्ध के हट जाने पर यह गरुड़ प्रसन्न मुख हो उन सोलह हजार कुमारिकाओं को अपने साथ लेकर यहाँ आ रहा है ।

प्रस्तुत अंश में श्रीकृष्ण के द्वारा 'ये कितनी भी हों इन्हें भी जल्दी साथ ले चलो' इत्यादि कहकर जिन्हें लाया गया ( तथा इसी कारण वहाँ जाना पड़ा था ) उसी को फिर से बतलाने के कारण 'पूर्वभाव' है ।

**उपसंहार**—सभी इष्ट पदार्थों के प्राप्त हो जाने से कृतार्थ हो जाना 'उपसंहार' कहलाता है ॥ ११६ ॥

जैसे इसी नाटक के दसवें अक में :—

---

१. सर्वाभीष्टार्थशब्दितः इति ख० पु० पाठः ।

कृष्णः ( सर्वमभिनन्द्य, जनान्तिकम् ) प्राणेश्वरि राधे, प्रार्थयस्व किमतः परं ते प्रियं करवाणि । ( इत्यारभ्य )

राधिका—( सानन्दं संस्कृतेन )

सख्यस्ता मिलिता निसर्गमधुरप्रेमाभिरामीकृता
यामी मे समगंस्तु संस्तववती श्वश्रूश्च गोष्ठेश्वरी ।
वृन्दारण्यनिकुञ्जधाम्नि भवता सङ्गोऽप्ययं रङ्गवान्
संवृत्तः किमतः परं प्रियतरं कर्तव्यमत्रास्मि मे ॥ (ल०मा० १०।३६)

अत्र प्रकटमेवोपसंहारः ।

अथ प्रशस्तिः—

मङ्गलाशंसनं सम्यक्प्रशस्तिरभिधीयते ॥ १२० ॥

यथा तत्रैव—तथापीदमस्तु—

चिरादाशामात्रं त्वयि विरचयन्तु स्थिरधियो,
विदध्युर्ये वासं मधुरिमगभीरे मधुपुरे ।

---

श्रीकृष्ण—( सभी का अभिनन्दन करते हुए जनान्तिक द्वारा ) प्रिये राधिके, तुम बतलाओ अब मैं इससे अधिक तुम्हारा कौन इष्ट सम्पादन करूँ ? ( यहाँ से लेकर )

राधा—( आनन्द में आकर संस्कृत भाषा में ) सहज प्रेम से सुहाने वाली मेरी सारी सखियाँ आज मिल गयीं बहिन चन्द्रावली और गोपालों की स्वामिनी सास भी मिल गयी जो मेरी अति परिचित हैं । आपके साथ बृन्दावन के निकुंज में सानन्द मिलन भी हो गया अतः अब और कौन कार्य रहा जिसकी पूर्ति शेष हो ।

यहाँ 'उपसंहार' स्पष्ट है ।

**प्रशस्ति**—सभी की मंगलकामना की उद्घोषणा करना 'प्रशस्ति' कहलाता है ॥ १२० ॥

जैसे इसी नाटक में :—

फिर भी ऐसा हो कि माधुर्य से आपूर्ण इस मथुरा नगरी में निवास करने वाले भक्तगण स्थिर मति होकर भक्तिभाव से सदा आप पर

दधानः कैशोरे वयसि सखितां गोकुलपतेः
प्रपद्येथास्तेषां परिचयमवश्यं नयनयोः ॥

(ल० मा० १०।३७)

अत्र माथुर[1]मञ्जुलनिबद्धवासानां नेत्रपथे कृष्णावाप्तिरूपमङ्गलाशंसनात् प्रशस्तिः ।

पञ्चानामेव सन्धीनां चतुषष्टिः क्रमादिह ।
कीर्तितानि[2] मयाङ्गानि सम्यग्ललितमाधवे ॥ १२१ ॥
रसभावानुबोधेन प्रयोजनमवेक्ष्य च ।
साफल्यं[3] कार्यमङ्गानामित्याचार्याः प्रचक्षते ॥ १२२ ॥
केषाञ्चिदेषामङ्गानां वैफल्यं[4] केचिदूचिरे ।
दशरूपककाराद्यास्तत्सर्वेषां न सम्मतम् ॥ १२३ ॥

---

अपनी श्रद्धा बनाये रखें और नित्य किशोर अवस्था वाले गोकुलेश श्रीकृष्ण का दर्शन इन्हें सदा प्राप्त होता रहे ।

प्रस्तुत कथन में मथुरा क्षेत्र में मधुरभाव से श्रीकृष्ण की उपासना करने वाले भक्तमण्डल को श्रीकृष्ण की भक्ति प्राप्त होने की मंगलकामना करना 'प्रशस्ति' है ।

इस प्रकार मैंने पांच सन्धियों के चौसठ अंगों को ललितमाधव नाटक पर घटाते हुए बतलाया ।। १२१ ।।

आचार्यों का मत है कि रस, भाव आदि को व्यवस्थित रूप में संकेतित करते हुए प्रयोजन के अनुसार सम्पूर्ण सन्ध्यङ्गों को नाट्य-रचना में सन्निविष्ट करना नाटकीय सफलता है ।। १२२ ।।

दशरूपक आदि के रचयिता आचार्यों का मत है कि इन अंगों में कुछ अंग व्यर्थ हैं परन्तु यह मत सर्वसम्मत नहीं ।। १२३ ।।

---

१. मधुरा इति क० ख० पुस्तके पाठः ।
२. कीर्तिता नियमाङ्गानि इति क० ख० पुस्तके पाठः ।
३. साकल्यं इति ब० पु० पाठः ।
४. वैकल्यमिति ब० पु० पाठः, कैवल्यमिति ख० पु० पाठः ।

मुखादिसन्धिष्वङ्गानां क्रमोऽयं न विवक्षितः ।
क्रमस्यानादरादाद्यैः लक्ष्येषु व्युत्क्रमादपि ॥ १२४ ॥
अङ्गान्निष्पादयेदेतान् नायका प्रतिनायका ।
तदभावे पताकाद्यास्तदभावे तथेतरः ॥ १२५ ॥

अथ सन्ध्यन्तराणि—

मुखादिसन्धिष्वङ्गानामशैथिल्याय सर्वदा[1] ।
सन्ध्यन्तराणि योज्यानि तच्च तत्रैकविंशतिः ॥ १२६ ॥
सामदाने भेददण्डौ प्रत्युत्पन्नमतिर्वधः ।
गोत्रस्खलितमोजश्च धीः क्रोधस्साहसं भयम् ॥ १२७ ॥
माया च संवृतिर्भ्रान्तिर्दूत्यं हेत्ववधारणम् ।

इन अंगों का मुख आदि सन्धियों में क्रमशः रखा जाना इष्ट नहीं है क्योंकि लक्ष्य ग्रन्थों में ये अंग विपरीत क्रम से प्राप्त होते हैं अतएव 'सन्ध्यङ्गों' का क्रमशः रखने का नियम नहीं हो सकता ॥ १२४ ॥

इन अंगों का नायक या प्रतिनायक के द्वारा निर्वाह किया जाए तथा इन ( पात्रों ) के अभाव में पताका नायक या अन्य पात्र इनका निर्वाह करें ॥ १२५ ॥

**अन्तरसन्धियाँ या सन्ध्यन्तर[1]**

मुख आदि सन्धियों में स्थित सन्ध्यंगों की कसावट के लिये इक्कीस सन्ध्यन्तर या अन्तरसन्धियों की नाट्य रचना में योजना करना चाहिये ॥ १२६ ॥

इनके नाम हैं—( १ ) साम, ( २ ) दान, ( ३ ) भेद, ( ४ ) दण्ड, ( ५ ) प्रत्युत्पन्नमति, ( ६ ) वध, ( ७ ) गोत्रस्खलित, ( ८ ) ओज, ( ९ ) धी, ( १० ) क्रोध, ( ११ ) साहस, ( १२ ) भय, ( १३ ) माया, (१४) संवृति, ( १५ ) भ्रान्ति, ( १६ ) दूत्य, ( १७ ) हेत्ववधारण,

१. अन्तरसन्धियों के लक्षण धनञ्जय ने दशरूपक में नहीं दिये । विश्वनाथ ने धनिक के अनुसार इन्हें नहीं दिया है । भरत और भोज ने ( क्रमशः नाट्यशास्त्र तथा शृङ्गार-प्रकाश में ) इनका उल्लेख किया है । नाट्यदर्पणकार ने इन अंगों की परम्परा अति प्राचीन मानी है ।

१. सर्वतः इति ब० पु० पाठः ।

स्वप्नलेखौ मदश्चित्रमेषां लक्षणमुच्यते ॥ १२८ ॥

तत्र साम—

भवेत् साम प्रियं वाक्यं स्वानुवृत्तिप्रकाशनम् ॥ १२९ ॥

यथा—ललितमाधवे—दशमेऽङ्के—

कृष्णः—प्रिये, मैवं ब्रवीः

सन्तु भ्राम्यदपाङ्गभङ्गिखुरलीखेलाभुवः सुभ्रुवः,
स्वस्ति स्यान्मदिरेक्षणे क्षणमपि त्वामन्तरा मे कुतः ?
ताराणां निकुरुम्बकेन वृतया श्लिष्टेऽपि सोमाभया
नाकाशे वृषभानुजां श्रियमृते निष्पद्यते स्वश्छटा[1] ।

(ल० मा० १०।१०)

अथ दानम्—

दानन्तु कथितं धीरैः प्रियवस्तुसमर्पणम् ॥ १३० ॥

यथा तत्रैव अष्टमे—

माधवी—भट्टिदारिए ! सहत्थेण तुए गंठिदा एसा सूरसो-

---

(१८) स्वप्न, (१९) लेख, (२०) मद तथा (२१) चित्र। अब क्रमशः इनके लक्षण बतलाता हूँ ॥ १२७-१२८ ॥

**साम**—अपनी अनुकूलता बतलाने के लिये प्रियवचन कहना 'साम' कहलाता है ॥ १२९ ॥

जैसे ललितमाधव के दसवें अंक में :—

श्रीकृष्ण—प्रिये, तुम ऐसा क्यों कहती हो। देखो, अपने चंचल नेत्रों के कोनों से क्रीड़ा के अभ्यास या कवायद करने वाली चाहे अनेक सुन्दरी बालाएँ हों किन्तु हे मदिरेक्षणे, तुम्हारे बिना मेरा क्षेम कैसे हो सकता है ? आकाश में विद्यमान असंख्य तारों के समूह से चन्द्र की आभा को घेर लेने पर भी बिना अनुराधा के उसकी अपनी शोभा पूर्ण नहीं होती।

**दान**—प्रिय या इष्टतम वस्तु को देना 'दान' कहलाता है ॥ १३० ॥

जैसे इसी नाटक के अष्टम अंक में :—

माधवी—क्या इस सूर सौगन्धिक माला को अपने हाथों से गूथा

---

१. स्वच्छता इति ब० पु० पाठः।

अंधिअमाला। [ भर्तृदारिके ! स्वहस्तेन त्वया ग्रथितैषा सूरसौगन्धिकमाला। ]

चन्द्रावली—( मालामादाय ) अज्जउत्त, एसा कोत्थुहस्स सहवासिणी होदु। [ आर्यपुत्र, एषा कौस्तुभस्य सहवासिनी भवतु। ] ( इति वक्षसि विन्यस्यति। )

अथ भेदः

भेदस्तु कपटालापैः सुहृदां भेदकल्पना ॥ १३१ ॥

यथा चतुर्थे—

जटिला—( अपवार्य, सालीकस्नेहम् ) अयि वच्छे, 'सदा मं पलोहिअ ललिदा अहिसारेदि' त्ति मह पुत्तस्स पुरदो वहूडिआ अलिअं जेव्व तुमं सन्दूसेदि;[1] ता कित्ति लाहवं सहेसि। [ अयि वत्से, 'सदा मां प्रलोभ्य ललिता अभिसारयति' इति मम पुत्रस्य पुरतो वधूटिकालीकमेव त्वां दूषयति; तत्किमिति लाघवं सहसे ? ]

---

था राजकुमारी तुमने ?

चन्द्रकला—( माला को उठा कर ) हाँ जिससे यह आर्यपुत्र की हृदयवर्तिनी कौस्तुभमणि की सहवासिनी बने [ श्रीकृष्ण के वक्षःस्थल पर पहिना देती है ]

भेद—कपट भरे वचनों से दो व्यक्तियों में फूट डाल देना 'भेद' कहलाता है ॥ १३१ ॥

जैसे इसी नाटक के चतुर्थ अंक में :—

जटिला—( अपवारितक के द्वारा भूठा प्रेम बतलाते हुए ) अरी बिटिया, मेरे पुत्र के सामने यह बहू तुम्हें यह कह कर अपमानित करती है कि प्रलोभन देकर ही मुझे तो यह ललिता अभिसरण करवाती रहती है, अब तुम्हें इस अपमान को क्यों सहन करना चाहिये।

---

१. दूसेदि इति ब० पु० पाठः।

अत्र जटिलया कपटेन ललिताया भेदः कृतः[1]।

अथ दण्डः—

दण्डस्त्वविनयादीनां दृष्ट्या श्रुत्या च तर्जनम् ॥ १३२ ॥

यथा द्वितीये—कृष्णः ( साटोपम् ) रे रे दुष्ट !

राधापराधिनि मुहुस्त्वयि यन्न शस्तं,
शक्ष्यामि कर्तुमखिलं गुरुरेष खेदः ।
सर्वाङ्गिलेयमभिधावति लुप्तधर्मा
त्वां मुक्तिकालरजनी बत किं करिष्ये ?

( ल० मा० २।२८ )

अत्र शङ्खचूडतर्जनं दण्डः ।

अथ प्रत्युत्पन्नमतिः—

तात्कालिकी च प्रतिभा प्रत्युत्पन्नमतिर्मता ॥ १३३ ॥

यथा तत्रैव द्वितीये—

---

प्रस्तुत अंश में जटिला के द्वारा ( अपने ) कपटपूर्ण वचन द्वारा ललिता और राधा के बीच फूट डालना 'भेद' है ।

**दण्ड**—दुष्ट पुरुष के अविनीत आचरण को देख या सुन कर उसे डाँट आदि बतलाना 'दण्ड' कहलाता है ॥ १३२ ॥

जैसे ललितमाधव नाटक के द्वितीय अंक में :—

श्रीकृष्ण—अरे दुष्ट, तूने श्रीराधा का अपराध किया ( यह अच्छा नहीं हुआ और ) इसलिये अब मैं वह सभी करने के लिये उद्यत हूँ जो प्रशंसनीय नहीं। मुझे बड़ा दुःख हो रहा है कि अब यह सभी को ग्रस जाने वाली और मर्यादा तथा कर्तव्य का ध्यान न रखने वाली कालरात्रि तेरी ओर बढ़ रही है, पर अब क्या कर सकता हूँ।

यहाँ शंखचूड़ को डांटना 'दण्ड' है ।

**प्रत्युत्पन्नमति**—तात्कालिक प्रतिभा या हाजिरजबाबी को 'प्रत्युत्पन्नमति' समझना चाहिये ॥ १३३ ॥

जैसे इसी नाटक के द्वितीय अंक में :—

---

1. कृत इति अ० क० पुस्तके च नास्ति ।

ललिता—कुन्दलदे, अस्सुदपुव्वा एसा [1]कीरिसी रिचा वडुएण पढिज्जइ। [ कुन्दलते, अश्रुतपूर्वैषा कीदृशी ऋग् बटुकेन पठ्यते ? ]

मधुमङ्गलः—( साट्टहासम् ) वुड्ढिए, आहीरीमुद्धिआ तुमं री री गीदं च्चेअ जाणासि। अम्हअ वेदस्स तुमं कासि ? ता सुणाहि—कोसुमेसवीए साहाए तइअ-वग्गस्स ललणासुहअरी रिचा एसा। [ वृद्धे, आभीरीमुग्धिका त्वम्, री री गीतमेव जानासि। अस्मद्वेदस्य त्वं कासि ? तत् शृणु—कौसुमेषव्याः शाखायास्तृतीयवर्गस्य ललनाशुभकरी ऋगेषा। ]

अत्र मधुमङ्गलस्य प्रतिभा।

अथ वधः—

वधस्तु जीवितद्रोहक्रिया स्यादाततायिनः ॥ १३४ ॥

यथा द्वितीये ( नेपथ्ये )—

मुष्टिना झटिति पुण्यजनोऽयं
हन्त ! पापविनिवेशितचेताः।

---

ललिता—कुन्दलते, यह ऋचा तो कभी नहीं सुनी जिसे यह ब्राह्मण बालक पढ़ रहा है।

मधुमंगल—( अट्टहास करते हुए ) अरी बुढ़िया, तू भोली ग्वालिन ठहरी। तू केवल री री करते हुए ही गाना गाती है, तुझे हमारे वेद के ज्ञान से क्या वास्ता। तो सुन—यह कुसमेषु की शाखा के तीसरे वर्ग में कुमारी ललनाओं की मंगलकारिणी ऋचा है।

यहाँ मधुमंगल का उत्तर 'प्रत्युत्पन्नमति' है।

**वध**—आततायी के जीवन की विनाश करने वाली क्रिया का नाम 'वध' है॥ १३४॥

जैसे इसी नाटक के द्वितीय अंक में ( नेपथ्य में ) :—

ओ हो ! उस पापी यक्ष को कमलनयन श्रीकृष्ण ने अपने मुष्टि-

---

१. करिसीति ब० पु० पाठः।

पुण्डरीकनयनेन सखेलं
दण्डितस्सकलजीवितवित्तम् ॥ (ल० मा० २।३०)

अथ गोत्रस्खलितम्[1] :—

तद्गोत्रस्खलितं यत्तु नामव्यत्ययभाषणम् ॥ १३५ ॥

यथा सप्तमे—

चन्द्रावली—कण्ह [कृष्ण] (इत्यर्धोक्ते सलज्जम्) अज्जउत्त ! [आर्यपुत्र, ]

कृष्णः—(सानन्दस्मितम्) प्रिये ! दिष्ट्या सुधाधारां पायितोऽस्मि । तदलमार्यपुत्रेति कूपाम्बुना ।

अत्र चन्द्रावल्याः समयोल्लङ्घनाद् गोत्रस्खलितम् ।

अथौजः—

ओजस्तु वागुपन्यासो निजशक्तिप्रकाशकः ॥ १३६ ॥

---

प्रहार से क्रीड़ा करते हुये मार कर अच्छा दण्ड दिया । यह सभी को बड़ा कष्ट देता था ।

**गोत्रस्खलित**—नामों को उलट पलट कर विपरीत भाव से कह देना 'गोत्रस्खलित' कहलाता है ॥ १३५ ॥

जैसे इसी नाटक के सप्तम अंक में :—

चन्द्रावली—कृष्ण, (फिर बीच में ही रुक कर लजाती हुई) आर्यपुत्र !

श्रीकृष्ण—(आनन्द में मुसकुरा कर) प्रिये, तुमने प्रथम जो अमृत-पान करवा दिया उसके बाद आर्यपुत्ररूपी इस कूपोदक को रहने दो ।

यहाँ मर्यादालंघन करते हुये चन्द्रावली के द्वारा विरुद्ध शब्दों का प्रयोग करना 'गोत्रस्खलित' है ।

**ओज**—अपनी शक्ति को बतलाने वाले वचनों का प्रयोग 'ओज' कहलाता है ॥ १३६ ॥

---

1. गोत्रस्खलनमिति ख० पु० पाठः ।

यथा पञ्चमे—

सुपर्णः—देव ! बाढमातपत्रफणापटलीलघीयसः किङ्करस्यास्य गरुत्मतः सकृत्पक्षविक्षेपकेलयेऽपि न पर्याप्तिमेष्यति, दूरे विश्राम्यतु सखा मे सुदर्शनः कल्पान्तकुशलः ।

अत्र गरुडेन स्वशक्तिप्रकाशनादोजः ।

अथ धीः—

इष्टार्थसिद्धिपर्यन्ता चिन्ता धीरिति कथ्यते ॥ १३७ ॥

यथा द्वितीये—

राधिका—कुन्दलदे ! प्पसीद अनुकम्पेहि । अज्ज सा क्खु सामला कोमुदी जेण पीदा, ता जेव्व पुण्णवन्तं अप्पणो वामलोअणंचलं एत्थ खिण्णे मन्दभाइणि जणे खणं अप्पेहि । [ कुन्दलते, प्रसीद, अनुकम्पय । अद्य सा खलु श्यामला कौमुदी येन पीता, तमेव पुण्यवन्तमात्मनो वामलोचनाञ्चलमेतस्मिन् खिन्ने मन्दभागिनि जने क्षणमर्पय । ]

---

जैसे इसी नाटक के पंचम अंक में :—

सुपर्ण—देव, यह ठीक है कि आपका सेवक यह गरुड़ ही फणरूपी आतपत्र को फैलाने वाले इस तुच्छ के लिये पर्याप्त है। यह मेरे पंखों की क्रीड़ा के सम्मुख थोड़ी देर भी नहीं टिक सकता है इसलिये कल्पान्त में समर्थ मेरे मित्र सुदर्शन चक्र को अभी आप विश्राम करने दीजिये।

यहाँ गरुड़ द्वारा अपनी शक्ति का प्रदर्शन करना 'ओज' है।

धी—अभीष्ट वस्तु की प्राप्ति तक रहने वाली चिन्ता को 'धी' कहते हैं ॥ १३७ ॥

जैसे इसी नाटक के द्वितीय अंक में :—

राधिका—कुन्दलते, तुम मुझ पर प्रसन्न होकर कृपा करो। आज जिसने उस श्याम कौमुदी का पान किया उसी भाग्यशाली बायें अपने नेत्र के अंचल को थोड़ा इस अभागे और दुःखी जन पर भी कुछ क्षण के लिये जमने दो।

कुन्दलता—( सासूयमिवालोक्य ) अलं परपुरिसे गिज्झन्तीहिं तुम्हेहिं संभासणेण ( इति धावन्ती जटिलामुपेत्य ) अज्जे ! कहं पढमं बह्मणं ण मग्गेसि, जो क्खु सुरं पुआवइस्सदि। [ अलं परपुरुषे गृध्यन्तीभिर्युष्माभिः सम्भाषणेन । आर्ये ! कथं प्रथमं ब्राह्मणं न मृगयसे, यः खलु सूर्यं पूजापयिष्यति । ]

जटिला—वच्छे, सच्चं कहेसि । ता पसीद। आणेहि एक्कं विअक्खणं बम्हणम् । [ वत्से ! सत्यं कथयसि। तस्मात् प्रसीद। आनयैकं विचक्षणं ब्राह्मणम् । ]

अत्र राधिकोत्कण्ठातिशयदर्शनेन जटिलासमक्षमेव विप्रवेशेन कृष्णप्रवेशचिन्तनं कुन्दलतायाः धीः ।

अथ क्रोधः—

क्रोधस्तु मनसो दीप्तिरपराधादिदर्शनात् ॥ १३८ ॥

यथा द्वितीये ( नेपथ्ये )—

फुल्लत्याराान्नवविचकिले केलिकुञ्जेषु[1] फुल्ला

---

कुन्दलत—( घृणा से देखती हुई ) मैं अपनी वाणी को उनसे मिलाना नहीं चाहती जो नारियाँ परपुरुषों को देखकर ललचाने वाली हों ( दौड़ कर जटिला के पास जाकर ) आर्ये, तुम सर्वप्रथम उस ब्राह्मण को क्यों नहीं ढूँढ़ती जो सूर्य की पूजा करवादे ।

जटिला—बिटिया, तुम सच कहती हो। अच्छा तो प्रसन्न हो जाओ और एक किसी चतुर ब्राह्मण को ढूँढ़ कर ले आओ ।

यहाँ राधिका की अतिशय उत्कण्ठा जान जटिला के सम्मुख ही ब्राह्मणवेशधारी कृष्ण को लाने के लिये कुन्दलता का विचार 'धी' है।

क्रोध—अपराध आदि के देखने से मन में जलन उत्पन्न होना 'क्रोध' कहलाता है ।। १३८ ।।

जैसे इसी नाटक के द्वितीय अंक में ( नेपथ्य में ) :—

सान्ध्यवेला में नवमालिका के प्रफुल्ल होने पर यह बाला भी खिल

---

१. कुञ्जेऽद्य इति अ० पु० पाठः ।

शेफालीनां स्खलति कुसुमे हन्त ! चस्खाल बाला ।
मीलत्युच्चैः कुवलयवने मीलिताक्षी किलासीत्
वाच्यं किं वा परमुपहसीर्मां प्रणामच्छलेन ॥

( ल० मा० २।७ )

अत्र पद्मासखीनां हरये रोषः ।

अथ साहसम् :—

स्वजीवितनिराकाङ्क्षो व्यापारस्साहसं भवेत् ॥ १३९ ॥

यथा दशमे—

राधिका—( सखेदमात्मगतम् ) साहु रे कीर, साहु, बाढं अणुग्गहिदम्हि; ता दाणिं दुल्लहाहिट्ठदाणदच्छिणं तित्थवरं कालिअदेहं प्पविसिय अप्पाणं सप्पाणं तुरिअं उवहरिस्सम् । [ साधु रे कीर ! साधु, बाढमनुगृहीतास्मि; तदिदानीं दुर्लभाभीष्टदानदक्षिणं तीर्थवरं कालियह्रदं प्रविश्यात्मानं सर्पेभ्यस्त्वरितमुपहरिष्यामि । ]

---

गयी अर्धरात्रि में हरसिंगार के पुष्पों के गिरने पर यह भी लड़खड़ाने लगी ( चस्खाल ) और प्रातः कुमुदिनी के बन्द हो जाने पर यह भी नेत्रों को बन्द किये है । इसलिये क्या कहें प्रणाम के बहाने इसका उपहास क्यों कर रही हो ।

प्रस्तुत अंश में पद्मा की सखियों का श्रीहरि के प्रति 'क्रोध' स्पष्ट है ।

साहस—अपने जीवन की परवाह न करते हुये शौर्यपूर्ण कार्यों का करना 'साहस' है ॥ १३९ ॥

जैसे इसी नाटक के दशम अंक में :—

राधिका—( दुःखी होती हुई स्वगत ) अच्छा सुग्गे, तूने ठीक किया । मैं तेरी बड़ी अनुगृहीत हूँ । इसलिये अब मैं दुर्लभ और अपने इष्टपदार्थ की दान-दक्षिणा देने के लिये प्रसिद्ध उस कालियह्रदतीर्थ में कूद कर अपने प्राणों को शीघ्र ही सर्पों को समर्पित करती हूँ ।

अत्र राधायाः कालियह्रदप्रवेशः साहसम् ।

अथ भयम्—

भयन्त्वाकस्मिकत्रासः ।

यथा नवमे चित्रदर्शने—

मधुमङ्गलः—एसो संखऊडो । [ एष शंखचूडः । ]

राधा—( सभयम् ) परित्ताहि परित्ताहि ( इति कृष्ण-मालिङ्गति[1] )

अत्र शंखचूडप्रसङ्गेन राधात्रासः भयम् ।

अथ माया :—

माया कैतवकल्पना ॥ १४० ॥

यथा चतुर्थे—

वृन्दा—( सानन्दम् ) किं नाम राधासखीनां धियामक्षुण्णम् पश्य पश्य ।

---

प्रस्तुत अंश में श्रीराधाद्वारा कालियह्रद में प्रवेश करना 'साहस' है।

भय—आकस्मिक रूप से उपस्थित हो जाने वाली घबड़ाहट को 'भय' समझना चाहिये ।

जैसे इसी नाटक में चित्रदर्शन के प्रसंग में :—

मधुमङ्गल—यह शंखचूड़ है।

राधिका—( डरती हुई ) बचाओ, बचाओ ( आगे बढ़कर श्रीकृष्ण का आलिंगन करती है। )

यहाँ शंखचूड़ के प्रसंग में राधा का घबड़ा जाना 'भय' है।

माया—किसी को धोखे में रखने के लिये कपट-कल्पना करना 'माया' है ॥ १४० ॥

जैसे चतुर्थ अंक में :—

वृन्दा—( आनन्द के साथ ) राधा की सखियाँ क्या नहीं जानती हैं। देखो, देखो ।

---

१. कृष्णमालिङ्गते इति ख० पु० पाठः ।

मन्दा सान्ध्यपयोदसोदररुचिस्सैवाभिमन्योस्तनु-
र्वक्त्रं हन्त तदेव खर्वटघटीघोणं विगाढेक्षणम्।
व्यस्ता सैव गतिः करीरकुसुमच्छायं तदेवाम्बरम्
मुद्रा कापि तथाप्यसौ पिशुनयत्यस्य स्वरूपच्छटाम् ॥

( ल० मा० ४।३३ )

अत्र कैतवादभिमन्युवेषकल्पनेन[1] माया।

अथ संवृति :—

संवृतिः स्वयमुक्तस्य स्वयमाच्छादना भवेत् ॥ १४१ ॥

यथा नवमे—कृष्णः ( वृन्दामवलोक्य ) सत्यभामा, मयि कथम् ( इत्यर्द्धोक्ते। नववृन्दा दृशं कूणयति )

चन्द्रावली—( सखेदं नीचैः ) विण्णादं पेम्मगोरवम्। [ विज्ञातं प्रेमगौरवम् ]

---

सायंकालीन मेघों के समान इस अभिमन्यु के शरीर की भी मन्द शोभा है, और आँखों में धँसी हुई पर्वत की उपत्यका जैसा घड़े के समान नाकवाला वही मुँह है, इसकी चाल भी वैसी ही अटपटी और करीर के पुष्पों जैसा कपड़ा भी वही है पर फिर भी इसकी मुखमुद्रा आज किसी अपूर्व शोभा को स्वयं कह रही है।

यहाँ धोखा देने के लिये ( श्रीकृष्ण द्वारा ) अभिमन्यु का वेश धारण करना 'माया' है।

संवृति—पहिले किसी तथ्य को बतला कर फिर उसे छुपाने का उद्योग करना 'संवृति' कहलाता है ॥ १४१ ॥

जैसे नवम अंक में :—

श्रीकृष्ण—( आनन्द के साथ वृन्दा को देख कर ) सत्यभामा मुझ पर कैसे ( कहते हुये बीच ही में रुक जाते हैं। नववृन्दा आँख से, इशारा करती है। )

चन्द्रावली—(दुःखी होकर धीरे से) आपके प्रेम की महत्ता जान ली।

---

१. कल्पना इति ब० पु० पाठः।

कृष्णः—( निभाल्य, स्वगतम् ) हन्त ! कथमसौ देवी। भवतु। संवरीतुं प्रयतिष्ये ( प्रकाशम् )।

सती कथमसौ भामा देवी नाद्य प्रसीदति।

निदानमविदं सद्यः खिद्यते हृदयं मम॥ (ल० मा० ६।५६)

अत्र स्वयमुक्तस्य सत्यभामेत्यस्य शब्दस्य 'सती कथमभामा' इत्यर्थान्तरेण संवरणात् संवृतिः।

अथ भ्रान्ति :—

भ्रान्तिर्विपर्ययज्ञानं प्रसङ्गस्यापि निश्चयात्॥ १४२॥

यथा नवमे कृष्ण—

अत्र भावि-निरातङ्क-मारो मे रमणं मम।

दुरत्यन्ते कुशस्थल्या यदि दर्भाङ्गभूरियम्॥ (ल० मा० ६।५८)

चन्द्रा—माहवि, णूणं दिट्ठह्मि, जं विदब्भंगभुत्ति बाहरीअदि। [ माधवि, नूनं दृष्टास्मि, यद्विदर्भाङ्गभूरिति व्याह्रियते। ]

---

श्रीकृष्ण—( सम्हल कर अपने मन में ) अरे! यह तो महादेवी ( रुक्मिणी ) है। खैर ! अब इसे छुपाने का उद्योग करता हूँ [ प्रकट ]

यह सती अभामा [ क्रोध न करने वाली स्त्री ] होकर आज क्यों रूठ गयी है जो अभी तक प्रसन्न नहीं हो रही। मैं इसका कारण नहीं जान पाया इसी कारण मेरा मन दुःखी हो रहा है।

यहाँ स्वयं कहे गये सत्यभामा शब्द की ( सती+अभामा के सन्धिविच्छेद द्वारा ) विपरीत अर्थ में संगति लगा देने के कारण 'संवृति' है।

भ्रान्ति—किसी बात के प्रसंग को सुन कर या निश्चित कर उसके विपरीत भाव को ले लेना 'भ्रान्ति' है॥ १४२॥

जैसे नवम अंक में :—

श्रीकृष्ण—यहाँ मेरा अनंगविषयक रमण बिना आशंका के हो सकता है क्योंकि कुशस्थली में यहीं बिना दर्भ की भूमि है।

चन्द्रावली—माधवी, मुझे देख लिया। क्योंकि विदर्भ की पुत्री ( विदर्भाङ्गभूः ) कह कर व्यवहार किया जा रहा है।

अत्र विदर्भाङ्गभूरित्यस्य विगतदर्भभूमित्वाज्ञानं[1] देव्याः भ्रान्तिः ।

भ्रान्तिस्तु केचिदिच्छन्ति भृङ्गबाधाविचेष्टितम् ।

अथ दूत्यम् :—

दूत्यन्तु सहकारित्वं दुर्घटे कार्यवस्तुनि ॥ १४३ ॥

यथा प्रथमे—

कुन्दलता—

तिह्णाउला चऊरी पञ्जरिआसञ्जदा चिरं जलइ ।
पाअं वंजुलकुञ्जे ताराही सप्पधारेहि ॥ (ल० मा० १।५८)

[ तृष्णाकुला चकोरी पञ्जरिकासंयता चिरं ज्वलति ।
पादं वञ्जुलकुञ्जे ताराधीश प्रसारय ॥ ]

अत्र जटिलाप्रातिकूल्येन कुन्दलतायाः दुर्घटे राधासङ्गम-कार्ये सहकारित्वं दूत्यम् ।

---

प्रस्तुत अंश में—'विदर्भाङ्गभूः' शब्द को सुनकर एवं उसके विपरीत भावार्थ को महादेवी द्वारा ग्रहण करने के कारण 'भ्रान्ति' है [ अथवा 'विदर्भाङ्गभूः' शब्द के प्रयोग से महादेवी का दर्भहीन भूमि पर विदर्भ की पुत्री अर्थ लेते हुये आशंकित हो जाना 'भ्रान्ति' है । ]

कुछ आचार्य शृङ्गबाधा आदि से होने वाली चेष्टाओं को भ्रान्ति मानते हैं ।

दूत्यम्—किसी दुष्कर कार्य में सहायता करना 'दूत्य' कहलाता है ॥
जैसे प्रथम अंक में :—

कुन्दलता—( अपवारित के द्वारा ) प्यासी चकोरी पिंजरे में रोक देने के कारण जल रही है इसलिये हे ताराधिपति इन्दु, तुम अपने पादों ( किरणों, पैरों ) को लताकुंज में भी फैलाओ ।

यहाँ कुन्दलता का जटिला से विरुद्ध होकर दुर्घट राधामिलन में सहायता करना 'दूत्य' है ।

---

१. विदर्भ भूमित्वेति क० ख० पुस्तके पाठः ।

अथ हेत्ववधारणम्:—

निश्चयो हेतुनार्थस्य मतं हेत्ववधारणम् ॥ १४४ ॥

यथा द्वितीये—

वृन्दा—स्थाने खल्वियं तव चिन्ता। तथ्यमेषा दुष्टेनाक्रान्ता त्रिलोकीमेव सन्तापयेत्। यतः—

विद्योतन्ते गुणपरिमलैर्यास्समस्तोपरिष्टात्
ताः कस्यार्त्तिं दधति न खलस्पर्शदग्धास्तरुण्यः।
भूयो भूयः स्वयमनुपमां क्लान्तिमासादयन्ती[1]
मन्दाक्रान्ता भवति जगतः क्लेशदात्री[2] हि चिन्ता ॥

(ल० मा० २।६)

अत्र चित्रनिदर्शनोपबृंहितेन सर्वगुणोत्तम-स्त्रीदुःखरूपेण हेतुना सर्वजनदुःखस्य[3] निश्चयाद्धेत्ववधारणम्।

---

हेत्ववधारण—कारण को प्रदर्शित करते हुये किसी अर्थ का निश्चय करना 'हेत्ववधारण' समझना चाहिये ॥ १४४ ॥

जैसे इसी नाटक के द्वितीय अंक में:—

वृन्दा—तुम्हारी यह चिन्ता उचित ही है। क्योंकि दुष्टों से आक्रान्त होने पर यही त्रिभुवन को सन्तप्त कर देगी। क्योंकि—

जो युवतियाँ गुणों के सौरभ से खिल जाती हों वे इन दुष्टों के स्पर्श से दग्ध होकर किसे पीड़ा न देंगी। बार-बार अतिशय मलिनता प्राप्त कर धीरे-धीरे स्वयं ही वे सारे संसार को क्लेश देने वाली चिन्ता बन जायेंगी।

यहाँ स्त्री के दुःखी होने पर सभी को दुःख होने रूपी अर्थ को सकारण बतलाने से 'हेत्ववधारण' है।

---

१. कान्तिमिति क० पु० पाठः।
२. क्लेशपात्री हि चित्रा इति ख० पु० पाठः।
३. सर्वजनदुःखनिश्चयादिति क० ख० पुस्तके पाठः।

अथ स्वप्न :—

स्वप्नो निद्रान्तरे किञ्चिज्जल्पितं परिचक्षते[1] ॥ १४५ ॥

यथा सप्तमे—

नव०:—

श्वाफल्के[2]: सफलीबभूव ललिते हृल्लालसा-वल्लरी
हा धिक् ! पश्य मुरान्तकोऽयमुररीचक्रे रथारोहणम् ।
इत्थं ते करुणस्वरस्तबकितं स्वप्नायितं शृण्वती
मन्ये[3] तन्वि पतत् तुषारकपटाच्चक्रन्द यामिन्यपि ॥

( ल० मा० ७।१० )

अत्र राधायाः स्वप्नायितम् ।

अथ लेखः—

विवक्षितार्थकलिता पत्रिका लेख ईरितः ॥ १४६ ॥

यथा पञ्चमे—

---

स्वप्न—नींद में थोड़ा बड़बड़ाना 'स्वप्न' कहलाता है ॥ १४५ ॥

जैसे सप्तम अंक में :—

'अरी ललिते' अक्रूर के हृदय की आशालता आज सफल हो गयी। हाय! हाय ! ये मुरारी भी रथ पर चढ़ने के लिये राजी हो गये । हे तन्वि, इस प्रकार स्वप्न में तुम्हारे उच्चरित करुणापूर्ण शब्दों को सुनती हुई यह रात्रि भी ओस बरसाने के बहाने से दुःखी होती हुई चिल्ला रही है ।

यहाँ राधा का नींद में बड़बड़ाना 'स्वप्न' है ।

लेख—अपने हार्द या इष्ट भाव को बतलाने के लिये लिखी गई पाती ( पत्रिका ) को 'लेख' कहते हैं ॥ १४६ ॥

जैसे पंचम अंक में :—

---

१. परिकथ्यते इति ब० पु० पाठः ।

२. श्वाफल्गः इति ब० पु० पाठः ।

३. मन्ये तन्वि पतत्तुषार इति ब० पु० पाठः ।

पौर्णमासीः—

अचिरं निरस्य रसितैः प्रतिपक्षं राजहंसनिकुरम्बम् ।
कृष्णघनस्त्वाममृतैस्तृषिताश्चन्द्रकवतीं सिञ्च ॥ (ल० मा० ५।७)

इत्यसौ चन्द्रावली-पत्रिकालेखः[1] ।

अथ मदः—

मदस्तु मद्यजः ।

यथा पञ्चमे—भीष्मः ( पुनरवधाय, सस्मितम् )

बिले क नु विलिल्यिरे नृपपिपीलिकाः पीडिताः
पिनष्मि जगदण्डकं न न हरिः क्रुधं धास्यति[2] ।
शचीगृह्य कुरङ्ग रे हससि किं त्वमित्युन्नद-
न्नुदेति मदडम्बरस्खलितचूडमग्रे हली ॥ (ल० मा० ५।४१)

अत्र बलदेवस्य मदः ।

---

पौर्णमासी—अरे कृष्णमेघ, तुम अपना गर्जन आरम्भ कर राजहंस के समूह को हटाते हुये अपना अमृतवर्षण कर इस तृषित चन्द्रकलता का ( चन्द्रावली से आशय है ) सिंचन कीजिये।

यहाँ चन्द्रावली की उपर्युक्त पत्रिका 'लेख' है।

मद—मद्यपान आदि से होने वाला नशा 'मद' कहलाता है।

जैसे पंचम अंक में :—

भीष्मक—( फिर ध्यान से देख कर मुसकुराते हुये ) ये राजा रूपी चीटियाँ तो घबरा कर बिलों में समा गई हैं। मैं ही इस संसार के अण्डकटाह को दो टूक कर सकता हूँ पर ऐसा करने से श्री हरि क्रुद्ध नहीं होंगे ऐसा नहीं होगा। अरे इन्द्राणी से पाले हुये मृगपोत, तू व्यर्थ ही मुसकुराकर क्यों शोर मचा रहा है। देख, बलदेव जी मदमत्त हो अपना मस्तक हिलाते हुये इधर ही आ रहे हैं।

प्रस्तुत अंश में बलराम की दशा से 'मद' प्रकट हो रहा है।

---

१. पत्रलेखः इति क० ख० पुस्तके पाठः।
२. धास्यते इति ख० पु० पाठः।

अथ चित्रम्—

चित्रन्त्वाकाराणां विलोकनम् ॥ १४७ ॥

यथा नवमे—

नववृन्दा—( प्रविश्य ) समीक्ष्यतां विचित्रमिदं चित्रम् । अत्र माथुरचरित्रं[1] चित्रलिखितम् ।

सन्ध्यन्तराणां विज्ञेयः प्रयोगस्त्वविभागतः ।
तथैव दर्शनादेषामनैयत्येन सन्धिषु ॥ १४८ ॥

अथ विभूषणानि

एवमङ्गैरुपाङ्गैश्च सुश्लिष्टं रूपकश्रियः ।
शरीरं वस्त्वलङ्कुर्यात् षट्त्रिंशद्भूषणैः स्फुटम् ॥ १४९ ॥

---

चित्र—आकृतियों का आलेखन करना 'चित्र' कहलाता है ॥१४७॥

जैसे नवम अंक में :—

नववृन्दा—( आकर ) देखिये, यह चित्र बड़ा अचरज भरा है। इसमें मथुरा के निवासी का आश्चर्यमय चरित्र आलेखित किया गया है।

इन सन्ध्यन्तर या अन्तर सन्धियों का प्रयोग किसी विभाग के साथ नहीं किया जाता और सन्धियों में इनकी नियत स्थिति भी नहीं रहती ॥ १४८ ॥

**नाट्यालङ्कार**[1]

इन अंगों और उपांगों से ग्रथित रूपकों की शारीरशोभा कथावस्तु

---

१. नाट्यालंकारों के लक्षण नाट्यशास्त्र के १७ वें अध्याय में हैं। नाट्यालंकारों के नाम और क्रम में थोड़ा भेद नाट्यशास्त्र के दो पाठान्तरों के कारण प्राचीनकाल से ही चला आ रहा है। इनमें एक पाठ को नाट्यशास्त्र के प्राचीन टीकाकारों ने लिया और उसी का विश्वनाथ ने साहित्यदर्पण में तथा सिंहभूपाल ने रसार्णवसुधाकर में अनुसरण किया। रूपगोस्वामी ने भी इसी पाठ का अनुसरण किया। परन्तु दूसरे पाठ का आचार्य कीर्तिधर, धनञ्जय तथा अभिनवगुप्त ने भी अनुसरण किया है। विस्तार भय से हम यहाँ इनकी तुलना नहीं दे रहे हैं तदर्थ जिज्ञासुजन हमारे नाट्यशास्त्र के अनुवाद तथा टिप्पणी, परिशिष्ट आदि का सम्बन्धित स्थान पर अवलोकन करें।

---

१. चरितमिति क० ख० पुस्तके पाठः ।

भूषणाक्षरसङ्घातौ हेतुः प्राप्तिरुदाहृतिः ।
शोभा-संशय-दृष्टान्तावभिप्रायो निदर्शनम् ॥ १५०॥
सिद्धि-प्रसिद्धिर्दाक्षिण्यमर्थापत्तिर्विभूषणम् ।
पदोच्चयस्तुल्यतर्को विचारस्तद्विपर्ययः ॥ १५१ ॥
गुणातिपातोऽतिशयो निरुक्तं गुणकीर्तनम् ।
गर्हणानुनयौ भ्रंशो लेशः क्षोभो मनोरथः ॥ १५२ ॥
अनुक्तिसिद्धिः सारूप्यं माला मधुरभाषणम् ।
पृच्छोपदिष्टदृष्टानि षट्त्रिंशद्भूषणानि हि ॥ १५३ ॥

तत्र भूषणम् :—

गुणालङ्कारबहुलं भाषणं भूषणं स्मृतम् ॥ १५४ ॥

यथा नवमे—

कृष्णः—( समन्तादवलोक्य )

लक्ष्मीः कैरवकाननेषु परितः शुद्धेषु विद्योतते

---

को छत्तीस अलङ्कारों से भूषित करना चाहिये। ये अलङ्कार हैं— ( १ ) भूषण, ( २ ) अक्षरसंघात, ( ३ ) हेतु, ( ४ ) प्राप्ति, ( ५ ) उदाहृति, ( ६ ) शोभा, ( ७ ) संशय, ( ८ ) दृष्टान्त, ( ९ ) अभिप्राय, ( १० ) निदर्शन, ( ११ ) सिद्धि, ( १२ ) प्रसिद्धि, ( १३ ) दाक्षिण्य, ( १४ ) अर्थापत्ति, ( १५ ) विभूषण, ( १६ ) पदोच्चय, ( १७ ) तुल्यतर्क, ( १८ ) विचार, ( १९ ) विपर्यय, ( २० ) गुणातिपात, ( २१ ) अतिशय, ( २२ ) निरुक्त, ( २३ ) गुणकीर्तन, ( २४ ) गर्हण, ( २५ ) अनुनय, ( २६ ) भ्रंश, ( २७ ) लेश, ( २८ ) क्षोभ, ( २९ ) मनोरथ, ( ३० ) अनुक्त-सिद्धि, ( ३१ ) सारूप्य, ( ३२ ) माला, ( ३३ ) मधुरभाषण, ( ३४ ) पृच्छा, ( ३५ ) उपदिष्ट तथा ( ३६ ) दिष्ट ॥ १४९–१५३ ॥

भूषण—गुण तथा अलङ्कारों से युक्त वचनावली में सम्भाषण करना 'भूषण' कहलाता है ॥ १५४ ॥

जैसे इसी नाटक के नवम अंक में :—

श्रीकृष्ण—(चारों ओर देखकर) इधर इस अतिशय स्वच्छ कुमुदिनी-बहुल क्रीडाउपवन की सभी ओर शोभा बढ़ रही है, उधर सन्मार्ग के

सन्मार्गद्रुहि सर्वशार्वरकुले प्रोन्मीलति क्षीणता ।
नक्षत्रेषु किलोद्भवत्यपचितिः क्षुद्रात्मसु प्रायिकी
शङ्के शङ्करमौलिरभ्युदयते राजा पुरस्ताद्दिशि ॥
( ल० मा० ६।१० )

अत्र प्रसादमाधुर्यादिगुणानामनुप्रासश्लेषानुमानाद्यलङ्काराणाञ्च सत्तया भूषणम् ।

अथाक्षरसङ्घातः—

वाक्यमक्षरसङ्घातो भिन्नार्थं श्लिष्टशब्दकम्[1] ॥ १५५ ॥

यथा पञ्चमे—

सुपर्णः—देव, पश्य पश्य ।

वक्त्राणि भान्ति परितो हरिणेक्षणाना-
मारूढहर्म्यशिरसां भवदीक्षणाय ।
यैर्निर्मितानि तरसा सरसीरुहाक्ष
चन्द्रावलीपरिचितानि नभस्तलानि ॥
( ल० मा० ५।३२ )

---

प्रतिबन्धक अन्धकार वर्ग में क्षीणता आने लगी है और छोटे छोटे तारों की कहीं कहीं झिलमिलाहट झलक जाती है। इन बातों से प्रतीत होता है कि सामने वाली (पूर्व) दिशा में शिवजी के मस्तक पर स्थित रहने वाले नक्षत्रराज ( चन्द्र ) का उदय हो रहा है ॥

प्रस्तुत अंश में प्रसाद, माधुर्य आदि गुण तथा अनुप्रास, श्लेष, अनुमान आदि अलंकार होने से 'भूषण' है ।

**अक्षरसङ्घात**

भिन्न अर्थक एवं श्लिष्ट शब्दों की रचनावाली वाक्यावली को 'अक्षर-संघात' समझना चाहिये ॥ १५५ ॥

जैसे पंचम अंक में :—

सुपर्ण—हे कमलनयन देव, देखिये ! अपने अपने महलों की अटारियों पर आपके दर्शनार्थ स्थित रहने वाली इन हरिणनयनी सुन्दरियों के मुख चारों ओर ऐसे सुशोभित हो रहे हैं कि मानों वेग में जाने वाली चन्द्रों की पांत से जाना जाने वाला आकाश का रुचिर प्रदेश हो।

---

१. श्लिष्टरूपकमिति क० पु०, श्लिष्टवर्णकमिति रसार्णवसुधाकरे च पाठः ।

अत्र चन्द्राणामावल्या परिचितानीत्यत्र चन्द्रावली नाम प्रतिभानादक्षरसङ्घातः।

अथ हेतुः—

स हेतुरिति निर्दिष्टो यत्साध्यार्थप्रसाधकम्[1] ॥ १५६ ॥

यथा सप्तमे—

मधुमङ्गलः—( निरीक्ष्य ) पिअवअस्स ! पेक्ख। काए वि अणुराइणीए सेवा किदत्थि। [ प्रियवयस्य, पश्य। कयाप्यनुरागिण्या सेवा कृतास्ति। ]

कृष्णः—सखे ! साधु लक्षितम्।

असौ व्यस्तन्यासा विशदयति माला विवशतां
विभक्तेयं चर्चा नयनजलवृष्टिं कथयति।
करोत्कम्पं तस्या वदति तिलकं कुञ्चितमिदं
कृशाङ्ग्याः प्रेमाणं वरिवसितमेव प्रथयति ॥

( ल० मा० ७।३२ )

---

प्रस्तुत पद्य में चन्द्रावली शब्द के प्रयोग द्वारा 'चन्द्र की पांत' अर्थ के साथ 'चन्द्रावली' नाम की प्रतीति होने से 'अक्षरसंघात' है।

हेतु—अपने उद्देश्य ( साध्य ) की सिद्धि के लिये प्रस्तुत किये गये कारण को 'हेतु' समझना चाहिये ॥ १५६ ॥

जैसे सप्तम अंक में :—

मधुमंगल—( देख कर ) प्रिय मित्र, देखिये—यह सेवा किसी अनुरागिणी ने की है।

श्रीकृष्ण—मित्र, खूब पहिचाना। अव्यवस्थित रूप में यहाँ रखी हुई यह माला उसकी विवशता को प्रकट कर रही है, गिरे हुए आँसुओं से वियोग प्रकट हो रहा है और माला में गूंथे हुए तिल के पुष्पों की सिकुड़न से उसके हाथों के कम्पन का अंदाज लग जाता है। इस प्रकार उस कृशांगी के पूजन के ये उपकरण ही उसके आन्तरिक सन्ताप को बतला रहे हैं।

---

१. प्रकाशकमिति ख० पु० पाठ।

अत्रानुरागसाधनाय विवशत्वादिहेतुनां[1] कथनादयं हेतुः।

अथ प्राप्तिः—

एकदेशविलोकेन प्राप्तिः शेषाऽभियोजनम् ॥ १५७ ॥

यथा नवमे—

कृष्णः ( परिक्रम्य )

लब्धा कुरङ्गि नवजङ्गमहेमवल्ली
रम्या स्फुटं विपिनसीमनि राधिकाऽत्र।
अस्यास्त्वया सखि गुरोर्यदियं गृहीता
माधुर्यवल्लित-विलोचन-केलिदीक्षा ॥ (ल० मा० ९।१७)

अत्र लोचनसौन्दर्य-दीक्षा[2]-लालसस्य एकदेशस्य त्वयि विलोकनेन सालं त्वया लब्धेति विशेषार्थस्य योजनात् प्राप्तिः।

---

यहाँ अनुराग की सिद्धि के लिये विवशता आदि कारणों को बतलाना 'हेतु' है।

**प्राप्ति**

किसी एक अंश को देख कर अवशिष्ट भागों की विशेषता जान लेना 'प्राप्ति' कहलाता है ॥ १५७ ॥

जैसे इसी नाटक के नवम अंक में :—

श्रीकृष्ण—( आगे बढ़ते हुए ) अरी हिरनी, तूने इसी वन प्रदेश में उस अनवद्य सुन्दरी राधिका को—जो जंगम हेमलता जैसी है—अवश्य प्राप्त किया है; क्योंकि तुम्हारी सुन्दरता से लहराने वाली नेत्रों की इन क्रीड़ाओं का शिक्षण बिना उस गुरु से शिक्षा लिये कैसे हो सकता है।

प्रस्तुत उदाहरण में 'नेत्रों के सुन्दर कटाक्ष' को देख कर 'राधा से ही शिक्षा ग्रहण किये बिना उपलब्धि कैसे हो सकती है, इस (अवशिष्ट) विशेष अर्थ में योजना करने से 'प्राप्ति' है।

---

१. हेतुकथनादिति ख० पु० पाठः।
२. दीचालाभस्येति ब० पु०।

अथोदाहरणम्—

वाक्यं यद्गूढतुल्यार्थं तदुदाहरणं मतम् ॥ १५८ ॥

यथा द्वितीये—

कुन्दलता—( सस्मितम् ) राहि, देहि मे पारितोसिअं, यं सुट्ठु दुल्लहं दे अब्भत्थिदं मए णिव्वाहिदम् । [ राधे देहि मे पारितोषिकम् ; यत् सुष्ठु दुर्लभन्तेऽभ्यर्थितं मया निर्वाहितम् । ]

राधिका—( वक्रमवेक्ष्य ) कुन्दलदिए, किं मे अब्भत्थिदं ? कुन्दलते, किं मेऽभ्यर्थितम् ? ]

कुन्दलता—अई, कीस भुअं भंगुरेसि, जं सूराराहणं भणामि । [ अयि, कस्माद् भ्रुवं भङ्गुरयसि, यत् सूर्याराधनं भणामि ]

अत्र कुन्दलता भणितस्य साभिप्रायगूढार्थतया उदाहरणम् ।

"यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।
साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतमिति" कश्चित् ।

( सा० द० ६।११७ )

---

**उदाहरण**

समानता को दिखलाने वाले गूढ़ार्थक वाक्य को 'उदाहरण' कहते हैं।।

जैसे द्वितीय अंक में :—

कुन्दलता—( मुसकुराती हुई ) राधिके, तुम्हारे इष्ट एवं दुर्लभ इस कार्य को पूर्ण कर देने का अब हमें पारितोषिक मिल जाना चाहिये।

राधिका—( तिरछी निगाह से देखती हुई ) कुन्दलते, मेरा कौन इष्टकार्य था।

कुन्दलता—अरे ! तुम मुझ पर अपनी भौंहें क्यों चढ़ा रही हो। मैं तो सूर्य देवता के आराधन की बात कह रही थी।

यहाँ कुन्दलता के द्वारा अपने वक्तव्य को गूढ़ रखते हुए प्रस्तुत करने से 'उदाहरण' है।

तद् यथा—षष्ठे—

नारदः—ततस्तेनोक्तम्—

ज्वलितो जनः कृशानौ शाम्यति ततः कृशानुनैवायम् ।

भगवति कृतागसो मे भगवानेवाधुना शरणम् ॥

( ल० मा० ६।१७ )

अथ शोभा—

शोभा स्वभावप्राकट्यं[1] यूनोरन्योन्यमुच्यते ।

यथा चतुर्थे—

राधिका ( माधवमवलोक्य, सानन्दमात्मगतम् ) भो भअवं, आणन्दपज्जण्ण, ण क्खु रुन्धीअइ जलासारेण उक्कंठिदा तवस्सिणीहि मे दिट्ठीचउरी। क्खणं पिवेदु एसा दुल्लहं इमस्स मुहचन्दस्स जोण्हम् । [ भो भगवन् , आनन्दपर्जन्य, न खलु

---

अन्य आचार्य का मत है कि—'जहाँ समानार्थक वाक्यों के द्वारा अपना इष्ट अर्थ सिद्ध किया जाए उसे 'उदाहरण' समझना चाहिये' ( सा० द० ६।११७ )

जैसे इसी नाटक के षष्ठ अंक में :—

नारद—फिर उसने कहा—"आग से जलने वाले को आग से ही शान्ति मिल सकती है। भगवान् का अपराध करने पर अब मेरे रक्षक भी भगवान ही हो सकते हैं"।

शोभा

युवक और युवती का परस्पर अपने हार्द भाव बतलाना 'शोभा' कहलाता है ॥

जैसे ( इसी नाटक के ) चतुर्थ अंक में :—

राधिका—( माधव को देख कर आनन्दित होती हुई मन में ) अरे आनन्द की वर्षा करने वाले भगवन् मेघ, मेरी अति उत्कंठित बेचारी यह दृष्टि चकोरी इन (नेत्रों से) बहने वाली (आंसुओं की) धारा से जब

---

१. प्रभावप्राकट्यमिति ब० पु० पाठः ।

रुन्ध्यतां जलासारेणोत्कण्ठिता तपस्विनी मे दृष्टिचकोरी। क्षणं पिबत्वेषा दुर्लभामस्य मुखचन्द्रस्य ज्योत्स्नाम्। ]

कृष्ण—( राधामवेक्ष्य, सहर्षम् )

धावत्याक्रमितुं मुहुः श्रवणयोः सीमानमक्ष्णोर्द्वयी
पौष्कल्यं हरतः कुचौ वलिगुणैरारभ्यमानं ततः।
मुष्णीतश्चलतां भ्रुवौ चरणयोरुद्यद्धनुर्विभ्रमे
राधायाः तनुपत्तने नरपतौ बाल्याभिधे शीर्यति॥

( ल० मा० ४।२७ )

अत्र परस्परभावप्राकट्याच्छोभा। कैश्चित्तु—

'सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते।
श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते।' इत्याह

यथा नवमे—

नववृन्दा—( पुरोऽवलोक्य, सहर्षम् )

---

तक बन्द नहीं हो जाती तब तक इस मुखचन्द्र की दुर्लभ चन्द्रिका का पान थोड़ी देर इसे करने दिया जाए।

श्रीकृष्ण—( राधिका को देख प्रसन्न होकर ) श्रीराधा की शरीररूपी नगरी में बाल्यकाल की घोषणा करने वाले शासक के नष्ट हो जाने से मानो इसके दोनों सुन्दर नेत्र कर्ण प्रदेश की सीमा का उल्लङ्घन करने के लिये बढ़ रहे हैं, उरोज त्रिवली के गुणों से मध्यभाग को बाँध कर अपना विस्तार करने लगे हैं और चंचल भौंहें चढ़ाए हुए धनुष की लीला का अपहरण करने लगी है।

यहाँ दोनों ( श्रीराधा और कृष्ण ) के कथन द्वारा परस्पर अपने आन्तरिक भाव प्रकट करने से 'शोभा' है। अन्य आचार्य का मत है कि—'जहाँ प्रसिद्ध अर्थ के साथ अप्रसिद्ध अर्थ को प्रकट किया जाए और जहाँ श्लेष, कोमलता और वैचित्र्यगुम्फित रचना रहे तो उसे 'शोभा' मानना चाहिये।' ( सा० द० ६।१७६ )

जैसे नवम अंक में :—

नववृन्दा—( सामने देख प्रसन्न होती हुई ) पृथ्वी के वन प्रदेश को विशुद्ध करने वाली, चन्द्र के शीतल प्रकाश को विस्तीर्ण करने में निपुण

अथाभिप्रायः—

अभिप्रायस्त्वभूतार्थो हृद्यः साम्येन कल्पितः ।
अभिप्रायं परे प्राहुर्ममतां हृद्यवस्तुनि ॥ १६१ ॥

यथा चतुर्थे—

कृष्णः—( सोत्सुकं रोमाञ्चमुन्मील्य )

उद्गीर्णाद्भुतमाधुरी—परिमलस्याभीरलीलस्य मे
द्वैतं हन्त ! समक्षयन्मुहुरसौ चित्रीयते चारणः ।
चेतः केलिकुतूहलोत्तरलितं सद्यः सखे मामकं
यस्य प्रेक्ष्य [1]सुरूपतां व्रजवधूसारूप्यमन्विष्यति[2] ॥

( ल० मा० ४।१६ )

अत्राभूतार्थरूपस्य भगवद्-द्वितीयत्वस्य नटे कल्पनमभिप्रायः, हृद्यवस्तुनि स्वसौन्दर्ये भोगेच्छया ममता वा ।

---

**अभिप्राय**

असंभव वस्तु की समानता बतलाते हुए रमणीय कल्पना करना 'अभिप्राय' कहलाता है । अन्य आचार्य सुन्दर वस्तु की ओर होनेवाली ममता या आकर्षण को 'अभिप्राय' कहते हैं ॥ १६१ ॥

जैसे चतुर्थ अंक में :—

श्रीकृष्ण—( उत्सुकता प्रकट करते हुए रोमाञ्चित होकर ) यह नट माधुर्य के सौरभ को विकीर्ण करने वाली मेरी ग्वाल लीला को दूसरी बार अभिन्न रूप में प्रत्यक्षतः चित्रित कर रहा है । आज इसके अभिनय की रमणीय अभिव्यक्ति को देख कर मेरा मन चंचल होकर केलि कौतूहल हेतु व्रजाङ्गनाओं की समानता को तलाश करने लगा है ।

प्रस्तुत उदाहरण में केवल भगवान् में रहने वाले असम्भव स्वरूप की नट में कल्पना करने से 'अभिप्राय' है । अथवा सुन्दर लगने वाले स्वयं के स्वरूपसौन्दर्य में लगाव होकर भोगेच्छा वा ममता जागृत हो जाना 'अभिप्राय' समझना चाहिये ।

---

१. सरूपतामिति ख० पु० पाठः ।
२. मन्विच्छति इति ख० पु० पाठः ।

अथ निदर्शनम्—

[1]यथार्थानां प्रसिद्धानां क्रियते परिकीर्तनम् ।
परोपेक्षाव्युदासार्थं तन्निदर्शनमुच्यते ॥ १६२ ॥

यथा चतुर्थे—

गार्गी—( संस्कृतेन )

कामं सर्वाभीष्टकन्दं मुकुन्दं
या निर्बन्धात् प्राहिणोदिन्धनाय ।
[2]आचार्यानी सा करोति स्म प[3]ण्यं
पिण्याकार्थं हन्त चिन्तामणीन्द्रम् ॥ (ल० मा० ४।६)

अत्र बिम्बानुबिम्बवस्तुबोधनात् निदर्शनम् ।

अथ सिद्धिः—

अतर्कितोपपन्नः स्यात्सिद्धिरिष्टार्थसङ्गमः ।

---

**निदर्शन**

जब दूसरे के पक्ष या उपेक्षा को खण्डित करने के लिये प्रसिद्ध वस्तु का ( बिम्ब प्रतिबिम्ब भाव के साथ ) निरूपण किया जाये तो उसे 'निदर्शन' समझना चाहिये ॥ १६२ ॥

जैसे चतुर्थ अंक में :—

गार्गी—( संस्कृत भाषा में ) जो आचार्यानी सभी के प्रिय मुकुन्द को आग्रह कर लकड़ी लाने के लिये भेजती है वह मानो सरसों या तिल की खली के लिये चिन्तामणि रत्न का विनिमय करती है ।

प्रस्तुत अंश में प्रसिद्ध वस्तु का बिम्ब प्रतिबिम्ब भाव के द्वारा बोधन करवाने के कारण 'निदर्शन' है ।

**सिद्धि**

अभीष्ट वस्तु की अकस्मात् उपलब्धि हो जाना 'सिद्धि' कहलाता है ।

---

१. अत्रार्थानामिति अ० पु० पाठः ।
२. आचार्याणामिति ब० पु० पाठः ।
३. पुण्यमिति ब० पु० पाठः ।

यथा षष्ठे—

कृष्णः—( यथा कृत्वा सगद्गदम् )

उपतरु ललितां तां प्रत्यभिज्ञाय सद्यः
प्रकृतिमधुररूपां वीक्ष्य राधाकृतिं च[1] ।
मणिमपि परिचिन्वन् शङ्खचूडावतंसं
मुहुरहमुदघूर्णं भूरिणा सम्भ्रमेण ॥ (ल० मा० ६।४०)

अत्र इष्टस्य ललितादर्शनस्यातर्कितोपपन्नत्वात् सिद्धिः । कश्चित्तु—'बहूनां कीर्तनं सिद्धिरभिप्रेतार्थ-सिद्धये' इत्याह ।

तद् यथा—दशमे—

कृष्णः—प्रिये त्वदास्यं पश्यतो मे नोपमानवस्तूनि हृदय-मारोहन्ति नः । यतः—

धत्ते न स्थितियोग्यतां चरणयोरङ्केऽपि पङ्केरुहं
नाप्यङ्गुष्ठनखस्य रत्नमुकुरः कक्षासु दक्षायते ॥

---

जैसे षष्ठ अंक में :—

श्रीकृष्ण—( वैसा करते हुये गद्गद होकर ) तब वृक्ष के पास स्थित ललिता को पहिचान कर और वृक्ष के नीचे स्थित राधा की उस सहज सुन्दर प्रतिमा को देख और शंखों से निर्मित वेणी के साथ सजायी हुई उस ( स्यमन्तक ) मणि को पहिचान कर मुझे अति भ्रमवश चक्कर आने लगा ।

प्रस्तुत अंश में ललिता-दर्शन की अकस्मात् उपलब्धि होने से 'सिद्धि' है । कोई आचार्य ( सा० द० ) अपनी इष्ट सिद्धि के लिये अनेक बातों को एक साथ कह देना 'सिद्धि' मानते हैं ।

जैसे इसी नाटक के दशम अंक में :—

श्रीकृष्ण—प्रिये, तुम्हारा मुँह देखने पर मुझे उसकी तुलना के लिये कोई भी उपमानवस्तु स्थिर भाव से मन में नहीं टिकने पाती । क्योंकि कमल में तुम्हारे दास होने की भी योग्यता नहीं है, रत्नों से जटित या निर्मित दर्पण तुम्हारे पैर के अंगूठे के नख के अंश की भी बराबरी

---

१. कृतिश्चेति ब० पु० पाठः ।

चण्डि, त्वन्मुखमण्डलस्य परितो निर्मञ्छनेऽप्यञ्जसा।
नौचित्यं भजते समुज्ज्वलकला सान्द्रापि चन्द्रावली ॥
( ल० मा० १०।११ )

अत्र स्पष्टं गुणकीर्तनम्[1]।

अथ प्रसिद्धिः—

प्रसिद्धिर्लोकविख्यातैरर्थैः स्वार्थप्रसाधनम् ॥ १६३ ॥

यथा षष्ठे—

नववृन्दा—( स्वगतम् )

वसन्ती शुद्धान्ते मधुरिमपरीता मधुरिपो-
रियं तन्वी सद्यः स्वयमिह भवित्री करगता।
वृताङ्गीमुत्तुङ्गैरविकलमधूलीपरिमलैः[2]
प्रफुल्लां रोलम्बे नवकमलिनीं कः कथयति[3] ॥
( ल० मा० ६।२८ )

---

नहीं कर सकता। हे कोपने, वह घनी चन्द्रावली अपनी सम्पूर्ण उज्वल कलाओं से पूर्ण होने पर भी तुम्हारे मुखमण्डल की आभा को सहज में ही तिरोहित कर लेने की योग्यता नहीं रख पा रही है।

यहाँ गुणों का कीर्तन स्पष्ट है।

**प्रसिद्धि**

लोकप्रसिद्ध उत्कृष्ट पदार्थों के द्वारा किसी वस्तु का परिचय करवाना 'प्रसिद्धि' कहलाता है॥ १६३॥

जैसे षष्ठ अक में :—

नववृन्दा—( राधा के साथ चलती हुई, स्वगत ) माधुर्य परिपूर्ण होकर अंतःपुर में रहने के कारण यह कोमलांगी स्वयं ही मुरारि को हस्तगत होने वाली है क्योंकि वसन्त परिमल से अपने शरीर को

---

१. अयं भागः अ० क० पुस्तकयोर्नास्ति।
२. मधुनां परिमलैरिति अ० पु० पाठः।
३. प्रथयति इति ब० पु० पाठ।

अत्र लोकविख्यातस्य प्रफुल्लकमलिनीरोलम्बसङ्गमस्य कथनेन स्वार्थस्य राधामाधवयोः सङ्गमस्य साधनं प्रसिद्धिः ।

अथ दाक्षिण्यम्—

[1]दाक्षिण्यन्तु भवेद्वाचा परचित्तानुवर्तनम् ॥ १६४ ॥

यथा—द्वितीये—

ललिता—( सालीकम् ) अज्जे, पेक्ख । एसो किण्हो मोडिमं अह्म विडंबणं करेदि । [ आर्ये, पश्य । एष कृष्णः बलादस्मद्-विडंबनं करोति । ]

अत्र ललितया मुखरायाः चित्तानुवृत्तिर्दाक्षिण्यम् ।

अथार्थापत्तिः—

उक्तार्थानुपपत्त्याऽन्यो यस्मिन्नर्थः प्रकल्पते ।
वाक्यान्माधुर्यसंयुक्तात्सार्थापत्तिरुदाहृता ॥ १६५ ॥

---

आवृत करने वाली विकसित कमलिनी की अवस्था भौंरे को बतलाने के लिये कौन जाता है ?

यहाँ विकसित कमलिनी तथा भ्रमर के लोकप्रसिद्ध संगम को बतलाते हुये स्वाभीष्ट राधा-माधव-मिलन का संकेत करना 'प्रसिद्धि' है।

**दाक्षिण्य**

अपनी ( मधुर ) वाणी द्वारा दूसरों के मन का अनुरञ्जन करना 'दाक्षिण्य' कहलाता है ॥ १६४ ॥

जैसे द्वितीय अंक में :—

ललिता—( झूठ मूठ बतलाती हुई ) आर्ये, देखो । यह कृष्ण हमारी हठात् नकल करने लगा है ।

प्रस्तुत अंश में ललिता के द्वारा मुखरा का अनुरंजन करना 'दाक्षिण्य' है ।

---

१. दाक्षिण्यमुद्भवेदिति क० पु० पाठः ।

यथा—नवमे—

नववृन्दा—

कुन्ददन्ति दृशोर्द्वन्द्वं चन्द्रकान्तमयं तव ।

उदेति हरि-वक्त्रेन्दौ स्यन्दते कथमन्यथा ? (ल० मा० ६।१३)

अत्र स्यन्दनान्यथानुपपत्त्या नेत्रस्य चन्द्रकान्तमयत्वकल्पनादियमर्थापत्तिः ।

यथा वा—दशमे—

चन्द्रावली—देअ ! तुह्म विलास सोक्खाणं वाहादेण किद-महापराहम्हि[1] । ता कारुण्णेण आणवेहि । जधा गोट्ठवइणो गोट्ठं गदुअ वसंती तुमं सुहिणं करोमि । [ देव ! तव विलाससौख्यानां व्याघातेन कृतमहापराधास्मि । तत् कारुण्येनाज्ञापय । यथा गोष्ठपतेर्गोष्ठं गत्वा वसन्ती त्वां सुखिनं करोमि । ]

---

**अर्थापत्ति**

जहाँ उक्त अर्थ के उपपन्न न होने पर अन्यार्थ प्रतीति माधुर्यपूर्ण वाक्यों के द्वारा की जाए तो उसे 'अर्थापत्ति' समझना चाहिये ।।१६५।।

जैसे नवम अंक में :—

नववृन्दा—अरी कुन्द सदृश शुभ्र दाँतों वाली, तुम्हारे ये दोनों नेत्र चन्द्रकान्तमणि से ही निर्मित किये गये हैं। यदि ऐसा न होता तो ये कृष्णरूपी चन्द्र के उदित होने पर क्यों बहने लगते ?

प्रस्तुत अंश में नेत्रों को चन्द्रकान्त मणि से निर्मित न मानने पर उनका बहना नहीं बतलाया जाने से 'अर्थापत्ति' समझना चाहिये ।

अथवा दशम अंक में :—

चन्द्रावली—देव, आपके विलास सुख में बाधा उत्पन्न करने के कारण मैं अपराधिनी बन गई। इसलिये मुझे इतना आदेश देने की दया करें कि गोपेश्वर की गोशाला में स्थित होकर तुम्हें सुखी बनाऊँगी ।

---

१. किदमहापावह्मि इति ख० पु० पाठः ।

अत्र गोष्ठगमनार्थस्यानुपपत्त्या सत्यासङ्गमनिषेधः प्रकल्प्यते ।

अथ विशेषणम्—

सिद्धान्बहून्प्रधानार्थानुक्त्वा यत्र प्रयुञ्जते ।
विशेषयुक्तं वचनं विज्ञेयं तद्विशेषणम् ॥ १६६ ॥

यथा—चतुर्थे—

कृष्णः—

लक्ष्मीवानिह दक्षिणानिलसखः साक्षान्मधुर्मोदते
माद्यद्भृङ्गविहङ्गहारिविहसत्यत्रापि वृन्दावनम् ।
राधा यद्यभिसारमत्र कुरुते सोऽयं महानेव मे
सान्द्रानन्द-विलास-सिन्धुलहरी-हिन्दोलकोलाहलः ॥

( ल० मा० ४।१७ )

अत्र प्रसिद्धार्थान्मधुवृन्दावनादीनुक्त्वा राधाभिसारस्य वैशिष्यकथनाद्विशेषणम् ।

---

यहाँ गोशाला में जाना रूपी अर्थ अनुपपन्न होकर सत्या के समागम का निषेध प्रतीत करवाने से 'अर्थापत्ति' समझना चाहिये ।

**विशेषण**

यदि अनेक प्रसिद्ध वस्तुओं का पहिले उल्लेख कर देने के उपरान्त फिर किसी एक में विशेषता बतलायी जाये तो उसे 'विशेषण' समझना चाहिये ॥ १६६ ॥

जैसे चतुर्थ अंक में :—

श्रीकृष्ण—यहाँ दक्षिणानिल का मित्र वसन्त अपनी सम्पूर्ण शोभा के साथ स्वयं विकसित हो रहा है और मदमत्त भौंरों और पक्षियों से मनोहर होकर वृन्दावन भी खिलखिलाकर प्रसन्न हो रहा है । ऐसे अवसर पर यदि राधा भी अभिसार करे तो निश्चित् ही आनन्द और विलास के महासागर में उत्पन्न होने वाली लहरियों के आन्दोलन की अतिशय कोलाहल भरी अवस्था बन जायेगी ।

प्रस्तुत अंश में वसन्तऋतु तथा वृन्दावन आदि प्रसिद्ध वस्तुओं का उल्लेख करने के उपरान्त राधाभिसार का विशेषतः उल्लेख करने से 'विशेषण' है ।

कश्चित् तु लेखिष्यमाणं—'नवनवसुधासम्बाधोऽपी'त्यादि-पद्यमत्रोदाहरति ।

अथ पदोच्चयः—

बहूनान्तु प्रयुक्तानां पदानां बहुभिः पदैः ।
उच्चयः सदृशार्थो यः स विज्ञेयः पदोच्चयः ॥ १६७ ॥

यथा चतुर्थे—

कृष्णः—

मतिरघूर्णत सार्धमलिव्रजैः
धृतिरभून्मधुभिस्सह विच्युता ।
व्यकसदुत्कलिका कलिकालिभिः
सममिह प्रियया[1] वियुतस्य मे ॥ (ल० मा० ४।२१)

अत्र मत्यादीनां घूर्णादिक्रियासु अलिव्रजादिभिः समावेशादयं पदोच्चयः ।

---

कुछ आचार्य आगे दिये जाने वाले 'नवनवसुधासम्बान्धोऽपी' आदि पद्य को विशेषण का उदाहरण मानते हैं ।

**पदोच्चय**—प्रयोग किये गये अनेक पदों के समानता बतलाने वाले अर्थ का अनुरूप पदों में गुम्फन 'पदोच्चय' कहलाता है ॥ १६७ ॥

जैसे चतुर्थ अंक में :—

श्रीकृष्ण—प्रियतमा से वियुक्त हो जाने की दशा में इन भौंरों के साथ मेरी बुद्धि भी घूमने लगी है, वसन्त के साथ धैर्य भी लुप्त हो रहा है और पुष्पों की कलियों के साथ मिलन की उत्कण्ठा भी चटखाने लगी है ।

प्रस्तुत अंश में मति घूमने आदि क्रियाओं के साथ भँवरों के समूह आदि की समानता बतलाने वाले पदों का सन्निवेश करने के कारण 'पदोच्चय' समझना चाहिये ।

---

१. अयमहप्रिययेति क० पु० पाठः ।

कश्चित्तु—'उच्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः' इत्याह।

यथा दशमे—

सुतनु किञ्चिदुदञ्चय लोचने चलचकोर-चमत्कृति-चुम्बिनी।
स्मितसुधाञ्च सुधाकरमाधवी विधुरतो विधयेऽत्र[1] धुरन्धराम् ॥
(ल० मा० १०।८)

अथ तुल्यतर्कः—

रूपकैरुपमाभिर्वा तुल्यार्थाभिः प्रयोजितः।
अप्रत्यक्षार्थसंस्पर्शः तुल्यतर्क इतीरितः ॥ १६८ ॥

यथा तत्रैव—नवमे—

कृष्णः—

कदर्थनादप्युरुबाल्यचापलैरुत्सर्पतो स्नेहभरेण विक्लवाम्।
विलोकमानस्य ममाद्य मातरं हविर्विलाय्यं[2] हृदयं विलीयते ॥
(ल० मा० ९।२६)

---

कोई आचार्य 'अर्थ के अनुरूप पदों का सन्निवेश करना 'पदोच्चय' बतलाते हैं' ( सा० द० ६।१८० )।

जैसे दशम अंक में :—

सुन्दरी, तुम अपने उन नेत्रों को तो थोड़ा ऊपर उठाओ जो चंचल चकोर के समान चमत्कृत करने वाले हैं और मधुर मुसकान रूपी सुधा का जो इस कार्य में अतिशय प्रमुख रहती है—विस्तार कीजिये ?

तुल्यतर्क—उपमा या रूपक के द्वारा किसी परोक्ष अर्थ को समानता बतलाते हुए अभिहित करना 'तुल्यतर्क' कहलाता है ॥१६८॥

जैसे नवम अंक में :—

मेरे द्वारा बाल्यकाल में अतिशय चपलता वश सतायी जाने के कारण घबड़ाई हुए माता को आज उमड़ते हुए प्रेमाधिक्य के कारण देखने पर मेरा हृदय घृत ( हविष् द्रव्य ) के समान द्रवित हो रहा है।

प्रस्तुत उदाहरण में 'घृत' के समान द्रवित होने में लुप्तोपमा के द्वारा अप्रत्यक्ष चित्तद्रव का कथन करना 'तुल्यतर्क' है।

---

१. विधयेऽद्येति ब० पु० पाठः। २. विलोयमिति ब० पु० पाठः।

अत्र हविर्विलायमिति लुप्तोपमयाऽप्रत्यक्षस्य चित्तद्रवस्य कथनं तुल्यतर्कः ।

कश्चित्तु 'तुल्यतर्को यदर्थेन तर्कः प्रकृतगामिने'त्याह ।

यथा चतुर्थे—

जटिला—णूणं, णूउरसद्देन आहडिट्टा एदे हंसा हंसणंदिणीजलादो वणे धाअन्ति । ता वहूडिआ णादिदूरे हविस्सदि । [ नूनं नूपुरशब्देनाकर्षिता एते हंसा हंसनन्दिनीजलात् वने धावन्ति । तद्वधूटिका नातिदूरे भविष्यति । ]

अथ विचारः—

विचारस्त्वेकसाध्यस्य बहुसाधनवर्णनम् ।

यथा प्रथमे—

कृष्णः—

सखे, मधुमङ्गल, पश्य ।

अतनुतृणकदम्बास्वादशैथिल्यभाजा-

मविरलतरहंभारम्भताम्यन्मुखीयम्[1] ।

---

कोई आचार्य—'प्रकृत पदार्थ के द्वारा ( समानता बतलाने वाले ) तर्क प्रस्तुत करना 'तुल्यतर्क' मानते हैं ( सा० द० ६।१८० ) ।

जैसे चतुर्थ अंक में :—

जटिला—जब पैंजन की आवाज से खिंचकर ये हंस जमुना के जल से निकल कर वन की ओर भाग रहे हैं तो जरूर बहू भी पास के ही किसी वन में होनी चाहिये ।

**विचार**—एक साध्य के लिये अनेक साधनों का वर्णन करना 'विचार' कहलाता है ।

जैसे प्रथम अंक में :—

श्रीकृष्ण—मित्र मधुमंगल, देखो । तृणों का अतिशय आस्वादन करने से अघायी हुई और इसी कारण धीरे धीरे चलने वाली यह

---

१. हम्बारन्त इति ब० पु० पाठः ।

चटुलितनयनश्रीरावली नैचिकीनां
पथि[1] सुवलितकण्ठी गोकुलोत्कण्ठिताभूत् ॥

( ल० मा० १।२८ )

अत्रोत्कण्ठितस्य[2] साध्यस्य साधनानि तृणास्वादशैथिल्यादीनि। यद्वा अग्रे लेख्यं 'शरणमिह यो भ्रातुः' ( ल० मा० ५।२५ ) इत्यादि पद्यमत्रोदाहरणं ज्ञेयम्। कश्चित्तु—'विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थदर्शनम्' इत्याह। अत्रोक्तमुदाहरणमपि सङ्गच्छते।

अथ तद्विपर्ययः—

विचारस्यान्यथाभावो विज्ञेयस्तद्विपर्ययः ॥ १६९ ॥

यथा—षष्ठे—

राधा—( सव्यथमाकाशे संस्कृतमाश्रित्य )

---

सुरभि गौओं की पाँत अब धीरे धीरे उत्कंठा के कारण गोकुल की ओर जाने के लिये उतावली हो रही है। इसलिये इनके मुँह अति हुङ्कार भरने से खिन्न हो रहे हैं, नेत्र चञ्चल हैं और ये सुन्दर कण्ठों को तिरछे घुमाती हुई रास्ता पार कर रही हैं।

प्रस्तुत वर्णन में उत्कण्ठातिशय साध्य है तथा इसी को उपपन्न करने के लिये तृणों के अतिशय आस्वादन में शिथिलता आदि अनेक कारण साधन रूप में प्रस्तुत करने से 'विचार' है। अथवा इसका उदाहरण—'अग्रे लेख्यम्' इत्यादि पद्य समझना चाहिये। किसी आचार्य ने इसका लक्षण किया है—'युक्तियुक्त' वाक्य के द्वारा अप्रत्यक्ष अर्थ को सिद्ध करना 'विचार' है ( सा० द० ६।१८२ )। ऐसा लक्षण मानने पर भी हमारा उक्त उदाहरण ही ठीक घट जाता है।

**विपर्यय**—अपने विचार के विपरीत ( कार्य आदि ) हो जाना 'विपर्यय' कहलाता है ॥ १६६ ॥

जैसे इसी नाटक के षष्ठ अंक में :—

राधा—( दुःखी हो ऊपर ( आकाश में ) देखती हुई, संस्कृत भाषा में। )

---

१. पथिषु इति अ० पु० पाठः। २. अत्रोत्कठितञ्च इति अ पु० पाठः।

विचित्रायां क्षोण्यामजनिषत कन्याः कति न वा
कठोराक्षी नान्या निवसति मया कापि सदृशी ।
मुकुन्दं यन्मुक्त्वा समयमहमद्यापि गमये
धिगस्तु प्रत्याशामहह धिगसून् धिङ् मम धियम् ॥
( ल० मा० ६।२१ )

अत्रोद्वेगातिशयेन प्रत्याशाधिकरणाद्विपर्ययः ।

अथ गुणातिपातः—

गुणातिपातो व्यत्यस्तगुणाख्यानमुदाहृतः[1] ॥ १७० ॥

यथा चतुर्थे—( सोल्लुण्ठं विहस्य, संस्कृतेन )

व्रजेश्वरसुतस्य कः परवधूविनोदक्रिया-
प्रशस्तिभरभूषितं गुणमवैति नास्य क्षितौ ।
यदेष रतितस्करः पथि निरुध्य साध्वीर्बला-
त्तदीयकुचकुड्मले करजमौनमो विष्णवे ॥
( ल० मा० ४।३१ )

---

इस विचित्र पृथ्वी पर कितनी ही कन्यायें उत्पन्न नहीं होतीं ? पर मेरे समान कठोर हृदय वाली ऐसी कोई न होगी जो मुकुन्द को छोड़ कर आज यों ही अपना समय बिताती हो। हाय! हाय!! ऐसी आशाओं, (ऐसे) प्राणों और मेरी ( ऐसी ) बुद्धि को भी धिक्कार है ! धिकार है !!

प्रस्तुत अंश में उद्वेग के आधिक्य होने से सभी को धिक्कारना 'विपर्यय' है।

**गुणातिपात**—किसी के गुणों का विपरीत दिशा से वर्णन करना 'गुणातिपात' कहलाता है ॥ १७० ॥

जैसे चतुर्थ अंक में :—

( आक्षेप करते हुये हँस कर संस्कृत भाषा में ) इस व्रजराज के कुमार को दूसरों की बहू-बेटियों से विनोद करने का क्या वास्ता ? पृथ्वी पर इसके प्रशस्तियों के भार अलंकृत होने वाले गुणों को कौन

---

१. व्यत्यस्तो इति क० पु० पाठः ।

अत्र प्रकटश्च गुणातिपातः। कश्चित्तु—'गुणातिपातः कार्यं यद्विपरीतं गुणान् प्रति' ( सा० द० ) इत्याह।

यथा पञ्चमे—चन्द्रावली ( संस्कृतेन )

शरणमिह यो भ्रातुस्तस्य प्रतीपविधायिना
हितकृदपि ता देव्यास्तस्याः समग्रमुपेक्षणम्।
गतिरविकलो यो मे तस्य प्रियस्य च विस्मृति-
र्बत हतविधौ वामे सर्वं प्रयाति विपर्ययम्॥

( ल० मा०. ५।२५ )

अथ अतिशयः—

बहून् गुणान्कीर्तयित्वा सामान्येन च संश्रितान्।
विशेषः कीर्त्यते यत्र ज्ञेयः सोऽतिशयो बुधैः॥ १७१॥

---

नहीं जानता कि यह रति-चौर हो, सती-साध्वी बधुओं को रास्तों में रोक कर उनके उरोज-कुड्मलों पर अपने नखों से खरोंचें डाल देता है।

प्रस्तुत उदाहरण में स्पष्टतः 'गुणातिपात' है। कोई आचार्य प्रसिद्ध गुणों के विपरीत कार्य हो जाना 'गुणातिपात' मानते हैं। ( सा० द० ६।१८४ )।

जैसे इसी नाटक के पंचम अंक में :—

चन्द्रावली—( संस्कृत भाषा में ) जो भाई रक्षक था उसी के द्वारा विपरीत आचरण किया गया, जो देवी हित करने वाली थी उसी की पूर्णतः उपेक्षा की गयी और जो मेरा एक मात्र आश्रय था उसी प्रिय की विस्मृति हो गयी। इस प्रकार स्पष्ट हो गया कि भाग्य के विपरीत होने पर सभी कार्य विपरीत हो जाते या बिगड़ जाते हैं।

( प्रस्तुत उदाहरण में विपरीत कार्य होने से 'गुणातिपात' है। )

**अतिशय**—पहिले साधारण या समान गुणों को बतला कर बाद में वहीं विशेषता बतलाना 'अतिशय' कहलाता है॥ १७१॥

यथा प्रथमे—कृष्णः—

नवनवसुधासम्बन्धोऽपि प्रियोऽपि दृशां सदा
सरसिजवनीं म्लानां कुर्वन्नपि प्रभया स्वया।
विधुरपि कलापूर्णोऽप्युच्चैः कुरङ्गधरश्शशी
व्रजमृगदृशां वक्त्रैरेभिः सुरङ्गधरैर्जितः॥

( ल० मा० १।३३ )

अत्र चन्द्रमुखयोः सुधासम्बन्धत्वादिसामान्यगुणकीर्तनानन्तरं मुखेषु सुरङ्गत्वकीर्तनं विशेषः।

अथ निरुक्तम्—

निरुक्तं निरवद्योक्तिर्नामान्यर्थप्रसिद्धये॥ १७२॥

यथा प्रथमे—कृष्णः—( चन्द्रावलीमासाद्य सानन्दम् )

---

जैसे प्रथम अङ्क में :—

श्रीकृष्ण—यद्यपि यह चन्द्र अयातयाम सुधा से पूर्ण है, सदा दृष्टि को प्रिय लगने वाला, अपनी प्रभा से कमलवन को मलिन कर देने वाला एवं समस्त कलाओं से पूर्ण होकर एवं कुरंग (हरिण, कुत्सितरंग ) को धारण कर 'शशि' कहलाते हुए, व्रज की अंगनाओं के मुखों की सारी समानताएँ धारण करने पर भी इन सुन्दरियों के सुन्दर वर्ण वाले मुखों के सुरंग होने के कारण जीत लिया गया है।

प्रस्तुत उदाहरण में चन्द्र के साथ मुख की सामान्यगुणों के द्वारा समानता बतला कर बाद में चन्द्र को कुरङ्गधर और व्रजांगनाओं के मुखों को सुरंगधर बतलाने के कारण 'अतिशय' है।

निरुक्त—किसी अदुष्ट शब्द या कथन को पुष्ट करने के लिये उसके समर्थन में दीजाने वाली और प्रसिद्ध वस्तुओं को बतलाने वाली वाक्यावली को 'निरुक्त' समझना चाहिये॥ १७२॥

जैसे प्रथम अङ्क में :—

श्रीकृष्ण—( चन्द्रावली के समीप आकर प्रसन्न होते हुए ) हे सुन्दरी, जब तुम्हारे मुख ने अपने भ्रूविक्षेप की लीला मात्र से चन्द्र को

---

१. मुखे इति ब०पु० पाठः।

नीतस्तन्वि मुखेन ते परिभवं भ्रूक्षेपविक्रीडया
बिभ्यद्विष्णुपदं जगाम शरणं तत्राप्यधैर्यं गतः ।
आसाद्य द्विजराजितां विजयिनः सेवार्थमस्योज्वल-
श्चन्द्रोऽयं द्विजराजतापदमगात्तेनासि चन्द्रावली ॥
( ल० मा० १।४० )

अत्र चन्द्रावली नाम निरुक्तम् ।

अथ गुणकीर्तनम्—

लोके गुणातिरिक्तानां बहूनां यत्र नामभिः ।
एकः संशब्द्यते तत्तु विज्ञेयं गुणकीर्तनम् ॥ १७३ ॥

यथा द्वितीये—कृष्णः—( पुरो राधां पश्यन्नपवार्य )

विहार सुरदीर्घिका मम मनःकरीन्द्रस्य या
विलोचन-चकोरयोः शरदमन्दचन्द्र-प्रभा ।

---

पराभूत कर दिया तो भयभीत हो वह आत्मरक्षण के लिये आकाश में भाग गया पर उसे वहाँ भी शान्ति न मिल पायी फिर उसने अपने विजेता के दाँतों की पांत का स्वरूप ( द्विजराजिताम् ) सेवा के लिये प्राप्त किया और संतप्त चन्द्र के द्वारा ऐसा स्वरूप प्राप्त होने पर उन्हीं दाँतों की पांत को [ चन्द्रानाम् आवलिः ] तुम्हारे मुख द्वारा धारण कर लेने से तुम्हारा 'चन्द्रावली' नाम हो गया ।

यहाँ चन्द्रावली नाम की सार्थक एवं प्रसिद्ध व्याख्या करने से 'निरुक्त' है ।

**गुणकीर्तन**—जब समस्त संसार में उपलब्ध होने वाले गुणों की संख्या से अधिक गुण एक ही व्यक्ति में बतलाये जाएँ तो उसे 'गुणकीर्तन' कहते हैं ॥ १७३ ॥

जैसे द्वितीय अङ्क में :—

श्रीकृष्ण—( अपने सम्मुख राधा को देखकर अपवारित के द्वारा ) मेरे मन रूपी मत्तगजेन्द्र के विहारार्थ निर्मित की गयी जो दिव्य वापिका ( सुरदीर्घिका ) है, मेरे नेत्रचकोरों के आह्लादार्थ शरद ऋतु

उरोम्बरतटस्य चाभरणचारुतारावली
मयोन्नत-मनोरथैरियमलम्भि सा राधिका ॥

( ल० मा० २।१० )

अत्र सुरदीर्घिकाशब्दैः राधासंशब्दनं गुणकीर्तनम् ।

अथ गर्हणम्—

यत्र सङ्कीर्तयन् दोषान्गुणमर्थेन दर्शयेत् ।
गुणान्वा कीर्तयन्दोषं दर्शयेद्गर्हणं हि तत् ॥ १७४ ॥

तत्राद्यं यथा सप्तमे—माधवी—देअ ! कटोरप्पा एसा भट्टिदारिआ सुट्ठ तावं सोढुं पारेदि जं तुम्ह पच्चक्खं च्चेअ चंदभाआमंदिरे जलंतं जलनकुंडं जलकेलिकुण्डं विण्णादवदी । [ देव ! कठोरात्मैषा भर्तृदारिका सुष्ठु तापं सोढुं पारयति तत्तव प्रत्यक्षमेव चन्द्रभागामन्दिरे ज्वलन्तं ज्वलनकुण्डं जलकेलिकुण्डं विज्ञातवती । ]

---

की अतिशय विस्तीर्ण ज्योत्स्ना है, मेरे वक्षरूपी आकाश को अलंकृत करने वाली तारावली ( एक अलंकार जो वक्षःस्थल पर धारण किया जाता है; तारों की पांत ) है वही यह राधिका है जिसे मैंने अपने उत्कट मनोरथ के द्वारा प्राप्त किया है [ अथवा अतिशय गुणशालिनी [ साराधिका ] इस सुन्दरी को मैंने अपने उत्कष्ट मनोरथ से ( आज ) प्राप्त किया है ]

प्रस्तुत अंश में सुरदीर्घिका आदि शब्दों के द्वारा राधिका का वर्णन करना 'गुणकीर्तन' है ।

**गर्हण**—दोषों को बतला कर उन्हें गुण के रूप में और गुणों को बतला कर दोषों के रूप में दर्शाया जाए तो 'गर्हण' समझना चाहिये ॥ १७४ ॥

इनमें प्रथम ( दोषों का गुण रूप में दर्शाना ) का उदाहरण सप्तम अंक में :—माधवी—देव, यह राजकुमारी बड़ी मजबूत है और सन्ताप को सहन करने में समर्थ भी । यह तुम्हें विदित ही है कि इसने

कृष्णः ( स्वगतम् )—माधवि ! साधु साधु यदत्र स्नेहातिरेकं सूचयन्ती समये सख्यसेवां वितनोषि ।

अत्र कठोरादिरूपस्य[1] दोषस्य कथनमपि कृष्णविषयानुराग गुणकीर्तनतया पर्यवसितम् ।

द्वितीयं यथा—चतुर्थे—

कुन्दलता—वीराहिमण्णो ! पुण्णवदी मे सही राहा । जाए दक्खिणा सच्चवादिणी सिणिद्धा तुम्ह मादा सस्सू लद्धा । [ वीराभिमन्यो ! पुण्यवती मे सखी राधा । यया दक्षिणा सत्यवादिनी स्निग्धा तव माता श्वश्रूर्लब्धा । ]

अत्र गुणकीर्तनमप्यर्थतो[2] दोष[3] इति गर्हणम् ।

---

चन्द्रभागा के मन्दिर में जलते हुए अग्निकुण्ड को जलविहार का कुण्ड समझ लिया था ।

श्रीकृष्ण—( अपने मन में ) माधवी, ठीक ही कहा । तुमने इसके अतिशय स्नेह की सूचना देकर अपना सूचना देने का कार्य एवं सखी-स्नेह का निर्वाहित कर लिया ।

प्रस्तुत अंश में कठोर ( मज़बूत ) आदि बतलाना यद्यपि दोष है किन्तु वही श्रीकृष्ण के अनुराग रूपी गुण के रूप में प्रकट होने से 'गर्हण' है ।

दूसरे ( गुणों का दोषरूप में दर्शाना ) का उदाहरण चतुर्थ अंक में :—

कुन्दलता—वीर अभिमन्यु, मेरी सखी यह राधा बड़ी भाग्यवती है जिसने चतुर, सत्य बोलनेवाली और सदा प्रेम करनेवाली तुम्हारी माता को सास के रूप में प्राप्त किया है ।

प्रस्तुत अंश में गुणों का वर्णन अन्ततः दोष में परिणत हो जाने से 'गर्हण' है ।

---

१. कठोरत्वादिरूपेति ब० पु० पाठः ।

२. अन्ततो इति क० पु० पाठः ।

३. दोषायेति ख० पु० पाठः ।

अथानुनयः—

अभ्यर्थनापरं वाक्यं विज्ञेयोऽनुनयो बुधैः ।

यथा पञ्चमे—

कृष्णः—( सास्रम् )

अयं कण्ठे लग्नः शशिमुखि जनस्ते प्रणयवान्
यदप्राप्त्या धन्यां तनुमतनुरूपां तृणयसि ।
प्रसीदाद्य प्राणेश्वरि विरम मास्मिन्ननुगते
कृथाः पत्यावत्याहितमिदमुरो मे विदलति[1] ॥

( ल० मा० ५।३५ )

अत्र कृष्णेन चन्द्रावलीप्रार्थनमनुनयः ।

अथ भ्रंशः—

पतनात्प्रकृतादर्थादन्यस्मिन्भ्रंश ईरितः ॥ १७५ ॥

यथा नवमे—माधवी—देअ, इमाणं पेम्मकोमलाणं

---

अनुनय—(किसी के लिये ) प्रार्थना करने वाले वचनों का व्यवहार करना 'अनुनय' है । जैसे पंचम अंक में :—

श्रीकृष्ण ( आँखों में आँसू लाकर ) चन्द्रमुखी प्रिये, जिसके प्राप्त न होने पर अपना सुन्दर रूप भी तुम तृणवत् तुच्छ समझती थी वही तुम्हारा प्रिय आज तुम्हारे गले से लगा हुआ है । इसलिये, तुम प्रसन्न हो जाओ । हे प्राणेश्वरी, अपने अनुगत स्वामी का इस प्रकार अहित मत करो ( ऐसा करने से ) आज मेरा हृदय फटा जा रहा है ।

प्रस्तुत अंश में श्रीकृष्ण के द्वारा चन्द्रावली की चाटुकारिता करना 'अनुनय' है ।

भ्रंश—प्रस्तुत अर्थ को छोड़कर स्वयं ही दूसरा ( अप्रस्तुत ) अर्थ कह देना 'भ्रंश' है ॥ १७५ ॥

जैसे नवम अङ्क में :—

माधवी—देव, प्रेम से मधुर वचनावली का प्रयोग करने के कारण इसे अपने अनुकूल मत समझो । यह सत्या नहीं है ।

---

१. विलसतीति ख० पु० पाठः ।

अक्खराणं मा क्खु णं अहिरूवं जाणाहि। जं एसा सच्चा ण होदि। [ देव, एषा प्रेमकोमलानामक्षराणां मा खल्वेतामभिरूपां जानीहि। यदेषा सत्या न भवति। ]

कृष्णः—साधु माधविके! साधु! मदीयहृदयाशङ्का त्वया निरस्ता। तदिन्द्रजालाभिज्ञया नववृन्दयैव निर्मितेयं मायिकी देवी रसालमूलवर्तिनी खलु सत्या।

अत्र सत्याशब्दस्य प्रकृतार्थं सत्यभामारूपं परित्यज्य तथ्यार्थलक्षणस्य कथनाद् भ्रंशः। कश्चित्तु—कथयन्ति बुधाः भ्रंशं वाच्यादन्यतरद्वचः' इत्याह। यथा प्रथमे—

कृष्णः—सरोजाक्षि परोक्षं ते कदापि हृदयं मम।
न स्प्रष्टुमप्यलं बाधा राधा त्वाक्रम्य गाहते॥

( ल० मा० १।४२ )

अत्र वाच्याद्राधाया अस्पर्शादन्यद्बाधाक्रमणं भ्रंशः।

---

श्रीकृष्ण—माधविके, तूने अच्छा किया। मेरे मन की आशङ्का दूर कर डाली। माया की विज्ञाता नववृन्दा ने इसी मायाविनी देवी को बनाया है जो आम्र के पेड़ की जड़ पर स्थित है और जो सत्या भी है।

यहाँ सत्या शब्द द्वारा प्रस्तुत सत्यभामा रूपी अर्थ को छोड़ कर दूसरे ही तथ्य ( सच ) अर्थ को ग्रहण करलेने से 'भ्रंश' है। किसी आचार्य के मत में प्रमत्त या दुःखी मनुष्यों के द्वारा प्रस्तुत अर्थ के विपरीत-कथन करना 'भ्रंश' है, ( सा० द० ६।१८७ )।

जैसे प्रथम अङ्क में:—

श्रीकृष्ण—अरी कमलनयने, मेरा हृदय तुम्हारे परोक्ष में बाधाओं को स्पर्श करने में असमर्थ हो रहा है पर जो बाधाएँ राधा को मन में रखने से आरही हैं उनको स्पर्श करने में भी समर्थ नहीं है।

यहाँ वाच्यार्थ में राधा का स्पर्श न होने पर दूसरी बाधाएँ आ जाती है ऐसा कथन करने से 'भ्रंश' है।

अथ लेशः—

लेशः स्यादिङ्गितज्ञानकृद्विशेषणवद्वचः ॥

यथा पञ्चमे—

भीष्मकः—अयमिह किल कन्या बान्धवानां निबन्धः
समुचित इति लक्ष्मीकान्त विज्ञापयामि ।
मम दुहितुरनुज्ञोल्लङ्घनादङ्गनायाः
कथमपि न परस्याः पाणिसङ्गो विधेयः ॥
( ल० मा० ५।३८ )

( इत्याद्युक्तौ कृष्णः पौर्णमासीमुखमीक्षते )

पौर्णमासी—मुकुन्द ! गोकुलकुमारीकुलानि चन्द्रावली-मात्रावशेषाणि दुर्विदग्धेन विधिना कृतानि । तदत्र का क्षतिः ?

अत्र चन्द्रावलीमात्रावशेषाणीति विशेषणवद्वचः कृष्णेङ्गित-ज्ञापकतया[1] संवृत्तमिति लेशः ।

लेश—आकार और चेष्टा को बतलाने वाले विशेषतापूर्ण उल्लेख करना 'लेश' कहलाता है ।

जैसे पंचम अङ्क में :—

भीष्मक—हे लक्ष्मीकान्त, हमारे परिवार के स्नेह का एकमात्र उचित आलम्बन यही कन्या रही है यह मैं आपको निवेदन करना चाहता हूँ । इसलिये मेरी इस पुत्री के आशय या मानसिक कामना का उल्लंघन कर किसी अन्य कुमारी के साथ आप अपना पाणिग्रहण न करें ।

( श्रीकृष्ण यह सुनकर पौर्णमासी की ओर देखने लगते हैं । )

पौर्णमासी—मुकुन्द, इस विघना ने दुर्भाग्य से अब गोकुल में केवल चन्द्रावली मात्र शेष रखते हुए कुलीनकन्या के कुल बनाये हैं । इसलिये कोई हानि नहीं होगी ( यदि आप इनकी बात मान लें । )

प्रस्तुत अंश में चन्द्रावली मात्र इत्यादि विशेषता पूर्ण उल्लेख के द्वारा कृष्ण को इंगित द्वारा सूचित करने के कारण 'लेश' है ।

१. संवृतमिति ख० पु० पाठः ।

अथ क्षोभः—

क्षोभस्त्वन्यगते हेतावन्यस्मिन् कार्यकल्पनम् ॥ १७६ ॥

यथा सप्तमे—कृष्णः—

त्वदङ्गसङ्गतैरेभिस्तत्पतास्मि मिहिरातपैः ।
विन्दन्ती वन्दनच्छायां मां देवि शिशिरीकुरु ॥

( ल० मा० ७।३७ )

अत्र सूर्यातपेषु चन्द्रावल्यङ्गसङ्गतेषु तत्कार्यभूतस्य तापस्य कृष्णेन स्वस्मिन्कल्पनात् क्षोभः । कश्चित्तु क्षोभस्थाने सङ्क्षेपं पठन्[1] लक्षयति—'सङ्क्षेपो यत्तु संक्षेपादात्मान्यर्थे प्रयुज्यते' । यथाष्टमे—कृष्णः[2]—देवि ! त्रिलोककक्षासु किं तवाभीष्टम् तद-

---

क्षोभ—कारण के अन्यत्र रहने पर भी अन्यत्र कार्य को समझ लेना 'क्षोभ' कहलाता है ॥ १७६ ॥

जैसे सप्तम अंक में :—

श्रीकृष्ण—हे देवि, तुम्हारे कोमल शरीर पर गिरने वाले इस सूर्य के ताप से हम स्वयं तप्त हो रहे हैं इसलिये इसे समझ कर अपने मुख ( चन्द्र ) की छाया प्रदान कर हमें शीतल बनाओ।

प्रस्तुत अंश में चन्द्रावली के अंग पर गिरने वाली सूर्य की धूप से उत्पन्न होने वाले ताप रूपी कार्य का श्रीकृष्ण द्वारा स्वयं पर आरोप करते हुए बतलाना 'क्षोभ' है । कुछ आचार्य क्षोभ के स्थान पर 'संक्षेप' मान कर उसका लक्षण बतलाते हैं। यथा—'जहाँ थोड़े से कथन के बाद दूसरे को आत्मसमर्पण कर दिया जाए तो उसे 'संक्षेप' समझना चाहिये।'

जैसे अष्टम अंक में :—

श्रीकृष्ण—देवी, तीन लोकों में विद्यमान किस पदार्थ पर तुम्हारी इच्छा है। हे प्रिये, तुम उसे बतला कर अपनी आज्ञाओं का उपयुक्त

---

१. सङ्क्षेपपठनं इति ख० पु० पाठः ।

२. नवबृन्दामुखे कृष्णोक्तिरिति ब० पु० ।

भिव्यज्य निज निदेशभाजनमन्यतयैव पर्याप्तसमस्तनिश्रेयसे प्रेयसि विधेहि प्रसादमाधुरीम् ।

अथ मनोरथः—

मनोरथस्तु व्याजेन विवक्षितनिवेदनम् ॥ १७७ ॥

यथा चतुर्थे—

राधिका—(सौत्सुक्यम् पुरो दृष्ट्वा) हला ललिदे, पेक्ख पेक्ख धण्णा एसा तरंगलेहा जा खु सेवालवल्लीणिबद्धपाआणं हंसिअं मोआवेदि । ता फुडं भिसिणीपत्तरिदेण कलहंसेण संघट इस्सदि । [ हला ललिते ! पश्य पश्य धन्यैषा तरङ्गलेखा या खलु शैवालवल्लीनिबद्धपादामेनां हंसिकां मोचयति तत्स्फुटं बिसिनीपत्रान्तरितेन कलहंसेन संघट्टयिष्यति । ]

अत्र हंसीव्याजेन राधायाः कृष्णसङ्गमाभिलाषकथनं मनोरथः ।

---

पात्र मान कर (हमारे) कल्याणार्थ अपनी प्रसन्नता की मधुरिमा को इधर अभिमुख करो ।

**मनोरथ**—किसी बहाने से (अथवा अन्यापदेश के द्वारा) अपना मनोगत भाव बतला देना 'मनोरथ' कहलाता है ॥ १७७ ॥

जैसे चतुर्थ अंक में :—

राधिका—(उत्सुकता के साथ सामने देखकर) सखी ललिते, देख तो जरा। यह लहरों की पांत कितनी सौभाग्यशालिनी है जो सेंवार की तांतों से बन्धी हुई उस हँसिनी के पैरों को छुड़वा रही है (मुक्त हो जाने पर) अब यह कमलिनी के पत्तों में दुबके हुए अपने इष्ट हँस से मिल जाएगी।'

प्रस्तुत अंश में श्रीराधा का हंसिनी के बहाने कृष्णमिलन रूपी मनोगत भाव बतलाना 'मनोरथ' है ।

अथानुक्तसिद्धिः—

प्रस्तावनैव शेषार्थो यत्रानुक्तोऽपि बुद्धयते ।
अनुक्तसिद्धिरेषा स्यादित्याह भरतो मुनिः ॥ १७८ ॥

यथा चतुर्थे—राधा—हला, लअंगकुंडंगे पुप्फं आहरंती वुंदावुणवासिणा मत्तकलहिंदेण आअदुअ हत्थेण गहिद-हत्थंह्मि संवुत्ता । तदो संभमेण घुमंतीए तुह हठेण ओट्ठपल्लअं दसन्तेण तिणा वामे त्थवअम्मि फ्फुरत्तीक्खकामंकुसं करपुक्खरं ( इत्यर्धोक्ते सरोमाञ्चानतमुखी भवति ) । [ हला ! लवङ्गकुञ्जे पुष्पमाहरन्ती त्वं वृन्दावनवासिना मत्तकलभेन्द्रेणागत्य हस्तेन गृहीतहस्तास्मि संवृत्ता । ततस्सम्भ्रमेण घूर्णन्त्यास्तव हठेनोष्ठ-पल्लवं दशता तेन वामे स्तबके स्फुरत्तीक्ष्णकामाङ्कुशं करपुष्करम्`` ।]

अत्रानुक्तस्यापि स्तने नखरार्पणस्य बोधादनुक्तसिद्धिः ।

---

अनुक्तसिद्धि—किसी बात को बिना पूर्णतः अभिहित किये जाने पर केवल उसके आरम्भ मात्र से ( जब ) अवशिष्ट अर्थ की प्रतीति हो जाए तो भरतमुनि के अनुसार उसे 'अनुक्तसिद्धि' समझना चाहिये ॥ १७८ ॥

जैसे चतुर्थ अंक में :—

राधिका—सखि, लवंगकुंज में, पुष्पों को चुनते हुए तुझे वृन्दावन निवासी मदमत्त हाथी ने आकर अपने कर ( हाथ, शुण्डादंड ) से तुम्हारे हाथों को थाम लिया । फिर जब घबड़ाहट के कारण तुम उसे घूरने लगी तो हठात् उसने तुम्हारे ओष्ठपल्लव को डस लिया और तुम्हारे बाएँ गुच्छ पर कामाङ्कुश जैसे शुण्डादण्ड रूपी कर को ( बीच में ही रुक कर रोमाञ्चित होकर अपना मस्तक झुका लेती है । )

प्रस्तुत कथन में उरोज पर नखार्पण का प्रत्यक्ष कथन न करने पर भी प्रसंगवश शेष अर्थ की सुस्पष्ट प्रतिपत्ति हो जाने से 'अनुक्तसिद्धि' है ।

अथ सारूप्यम्—

दृष्टश्रुतानुभूतार्थकथनादिसमुद्भवम्[1] ।
सादृश्यं यत्र संक्षोभात् तत्सारूप्यं निरूप्यते ॥ १७९ ॥

यथा चतुर्थे—जटिला—अरे आहिंडआ कीस मुखं ढकेसि ? जं दे विज्जा न विकाइदा । [ अरे आहिण्डक ! कस्मान्मुखमाच्छादयसि ? यत्ते विद्या न विक्रीता । ] ( इति प्रसह्य[1] सम्मुखयति ) अभि—(स्वगतम्) हद्धी हद्धी बाउलिआए अम्माए लज्जापज्जाउलो किदम्हि । ता इदो अवक्कमिस्सम् [ हा धिक् ! हा धिक् ! वातूलिकया अम्बया लज्जापर्याकुलः कृतोऽस्मि; तदितोपक्रमिष्यामि । ]

अत्र सारिकामुखश्रुतकृष्णप्रवेशसंक्षोभाज्जटिलायाः स्वपुत्रे कृष्णबुद्धिकथनात् सारूप्यम् ।

अथ माला[2]—

ईप्सितार्थप्रसिद्ध्यर्थं कथ्यन्ते यत्र सूरिभिः ।

---

**सारूप्य**—जब किसी वस्तु के देखने, सुनने, कहने अथवा अनुभव करने के कारण उसकी समानतावश भ्रम उत्पन्न होने लगे तो उसे 'सारूप्य' समझना चाहिये ॥ १७६ ॥

जैसे चतुर्थ अंक में :—

जटिला—अरे संपेरे, तू अपना मुँह क्यों छिपा रहा है ? क्या तूने अपनी सारी विद्या तो नहीं बेच डाली ?

अभिमन्यु—( स्वगत ) हाय ! हाय !! वायुरोग से पीड़ित इस माँ के यहाँ आ जाने से लज्जा के कारण मेरा मन घबड़ाने लगा है । इसलिये अब यहाँ से भाग उठना चाहिये ।

प्रस्तुत अंश में सारिका के मुख से श्रीकृष्ण के आगमन का समाचार पाकर आनेवाली जटिला का अपने पुत्र अर्जुन से भ्रमवश श्रीकृष्ण समझते हुए बात करना 'सारूप्य' है ।

**माला**—जब विद्वानों के द्वारा अपने प्रयोजन की पूर्ति के

---

१. प्रसाद्येति अ० पु० । २. शोभेति अ पु० पाठः ।

बहूनि कारणान्येव सा मालेत्यभिधीयते ॥ १८० ॥

यथा द्वितीये—राधा—ललिदे ! प्पसीद प्पसीद सुठ्ठु संकाउलम्हि । [ ललिते ! प्रसीद प्रसीद सुष्ठु शङ्काकुलास्मि । ] ( पुनः संस्कृतेन )

गतप्रायं सायं चरितपरिशङ्की गुरुजनः
परीवादस्तुङ्गो जगति सरलाहं कुलवती ।
वयस्यस्ते लोलः सकलपशुपालीसुहृदसौ
तदा नम्रं याचे सखि रहसि सञ्चारय न माम् ॥

( ल० मा० २।१६ )

अत्र सायं गमनादिबहुकारणानां स्वेष्टसञ्चारणाभावाय कथितत्वात् माला ।

अथ मधुरभाषणम्—

यत् प्रसन्नेन मनसा पूज्यं पूजयितुर्वचः ।

---

लिये अनेक कारण प्रस्तुत किये जाते हैं तो उसे 'माला' समझना चाहिये ॥ १८० ॥

जैसे द्वितीय अंक में :—

राधिका—ललिते, तुम मुझ पर दया करो और प्रसन्न हो जाओ। मैं सचमुच आशंकाओं से घबड़ा गयी हूँ ( संस्कृत भाषा में बोलते हुए )—( क्योंकि ) इस समय सन्ध्या होने को है ( यदि मैं यहाँ रुक जाती हूँ तो ) गुरुजन आचरण में शंका करने वाले हो जाएँगे और इससे बड़ी बदनामी होगी क्योंकि मैं सीधी-साधी और कुलीन घराने की बहू बेटी हूँ दूसरी ओर तुम्हारा सखा बड़े चंचलस्वभाववाला और समस्त गोपिकाओं का मित्र है। ऐसी दशा में तू एकान्त में जाने के लिये मुझे मत ढकेल। हे सखि, मैं नम्र होकर तुझ से यही प्रार्थना करती हूँ।

प्रस्तुत अंश में स्वच्छन्दतापूर्वक विहार करने में सायंकाल आदि अनेक कारणों को बाधा स्वरूप संकेतित करने के कारण 'माला' है।

**मधुरभाषण** ( प्रियोक्ति )—जब प्रसन्न चित्त होकर अपने पूज्यजन

